षेष्ववतिष्ठंते इति तस्य विशेषेभ्यस्तांतेभ्यो यथाविहितं त्यो भवति। कोऽसौ त्यः। "त्यः" परः "हृतः" इत्यधिकृत्य—

४६४। **प्रागद्रोरण्**। ३। १। ६२। द्रोः प्राग् येऽर्थाः वक्ष्यंते तेषु त्यः परो हृत्संज्ञकः अणित्यधिकृतो वोदितव्यः। तेनोक्तार्थत्वात् अपत्यशब्दस्य निवृत्तिः। णकार इत्संज्ञः ञ्णित्यच इति हृत्यक्ष्वादेरिति विशेषणार्थः। कृद्धृत्साः इति मृत्संज्ञा। सुपो धुमृदोरिति सुबुप्। यत्ये तदादिगुरिति गुसंज्ञायां-गोः मृजेरैबि-त्याधिकृत्य-ञ्णित्यच इत्यनुवर्तमाने–

४६५। [1]**हृत्यक्ष्वादेः**। ५। २। ५। गोरक्ष्वादेरचो हृति ञ्णिति परत ऐप् भवति। स्वासन्न इत्युकारस्य औकारः। स्वादावधे इति पदत्वे प्राप्ते -याचि भ इति भत्वात्–भस्येति हृतीति च प्रस्तुत्य–

४६६। **कद्रवोरोऽस्वयंभुव**[2]ः। ४। ४। १४७। कद्रू-शब्दस्य उवर्णांतस्य च गोर्भस्य ओकारादेशो भवति हृति परतः स्वयंभुशब्दं वर्जयित्वा। इत्युकारस्यौकारः। अवादेशः। ततः स्वादिः। औपगवः। एवं कापटवः। स्त्रियामिञ्टिठ्ढाणञित्या-दिना ङी भवति। औपगवी। हृद्विवक्षायां–

४६७। **पौत्रादि वृद्धं**। ३। १। ११२। परमप्रकृते-रपत्यवतो यदपत्यं पौत्रादि तत् वृद्धसंज्ञं भवति। उपगोरपत्यं

---

१। अस्य स्थाने-हृत्यचामादेः। ५। २। ५। इति सूत्रं।

२। कद्रूशब्दस्याप्युवर्णांतत्वेन सिद्धे पृथक्वचनं ढ खापवादार्थं। कद्रूशब्दश्च उश्च कद्र्वौ तयोः।

वृद्धमित्येवं विगृह्य-पौत्राद्यपत्यमापरमप्रकृतेः पूर्वेषामपत्यं भवतीति तत्संबंधविवक्षायामनंतरादिभ्योऽपि त्यः प्राप्तः स आद्यान्मूल-प्रकृतेरेवेति नियमान्निवर्तते । पुनरनेन त्यप्रसंगे एक इत्यनेन नियम्यते ततः उपगोरेव अणेव भवति । औपगवः । एवं काप-टवः । युवापत्यविवक्षायां–

**४९८ । [1]सति वंश्ये युवाऽस्त्री । ३ । १ । ११५ ।** वंशे भवो वंश्यः पित्रादिरात्मनः कारणं । पौत्रादेर्यदपत्यं चतुर्था-दिकं स्त्रीवर्जितं सति जीवति वंश्ये तद् युवसंज्ञं भवति । उपगो-रपत्यं युवेति विग्रहे–

४९९ । **ततो यूनि । ३ । १ ।११४।** ततो वृद्धत्यांतात् यून्यपत्ये विवक्षिते सत्याद्यात् वृद्धप्रकृतेरेक एव च त्यो भवति । त्ययुवापि नियमः । ततो न परमानंतरयुवप्रकृतेर्भवति । औपग-वशब्दादकारांतात् तस्यापत्यमिति प्रस्तुत्य—

**५०० । [2]इञतः । ३ । १ । ११६ ।** अकारांतान्मृदस्ता-समर्थात् अपत्येऽर्थे इञ् त्यो भवति । अणोपवादः । अकार इत्यर्थः । पूर्ववदन्यत् । औपगविर्युवा । दक्षस्यापत्यमिति पूर्वव-दिञ् । एरित्यखं । दाक्षिः । स्त्रियां–

**५०१ । [3]नुरितः । ३ । १ । ७५ ।** नृजातिवाचिनः इतः स्त्रियां ङीर्भवति । दाक्षी । दक्षस्यापत्यं वृद्धामिति वृद्धापत्यवि-

---

१ । **अस्य स्थाने--जीवति तु वंश्ये युवाऽस्त्री ।३।१।८१। इति सूत्रं।**

२ । **अस्य स्थाने--अदूवाहूवादेरिञ् । ३ । १ । ८५ । इति महावृत्तौ,**

३ । **अस्य स्थाने - इतो मनुष्यजातेः । ३।१।५५ । इति महावृत्तौ ।**

वक्षायां पूर्ववद् प्रकृतित्यनियमान्मूलप्रकृतेरेव दक्षशब्दादिञेव भवति । दाक्षिः । दक्षस्यापत्यं युवेति यून्यपत्ये विवक्षिते ततो यूनीति नियमान्नडादिभ्यः फण् इत्यधिकृत्य–

**५०२ । यञिञोः । ३ । १ । १३२ ।** यञंतादिञंताच्च वृद्धे वर्तमानाद्यून्यपत्ये फण् भवति । णकार ऐवर्थः ।

**५०३ । फढ[१]खछघ आयनेयीनीयियः । ४ । १।२ ।** फढखछघ इत्येतेषां वर्णानां गोनिमित्तभूतानां यथासंख्यं आयन् एय ईन् ईय् इय् इत्येते आदेशा भवंति । इति फस्यायन् । एरित्यखं । णत्वं । दाक्षायणः । गर्गस्यापत्यमिति विगृह्य पूर्ववदिञादिः । गार्गिः । गर्गस्यापत्यं वृद्धमिति विगृह्य–

**५०४ । गर्गादेर्यञ् । ३ । १ । १३३ ।** गर्गादिभ्यो वृद्धेऽपत्ये विवक्षिते यञ् भवति । पूर्ववच्छेषं ॥ गार्ग्यः । गार्ग्यौ । बहुषु-बहुष्वस्त्रियामिति वर्तमाने–

**५०५ । [२]यञञोऽगोपवनादेः । १ । ४ । १५८ ।** यञंतस्य इञंतस्य च बहुत्वे गोत्रे वर्तमानस्य यस्त्यस्तस्यास्त्रियामुब्भवति गोपवनादिभ्यो विहितं वर्जयित्वा । गर्गाः । स्त्रियां–

**५०६ । यञोऽषावटात् । ३ । १ । १६ ।** यञंतात् स्त्रियां वर्तमानात् ङीर्भवति न चेत् स यञ् षकारादवटशब्दाच्च परो भवति । इति ए ङ्यामिति खं ।

---

१ । अस्य स्थाने आयनेयीनीयियः फढखछघां त्यादीनां ।५।१। २। इति । २ । अस्य स्थाने इञो बहुवचः प्राच्यभरतेषु । १ । ४ । १३७ । न गोपवनादेः । १ । ४ । १३८ । इति सूत्रद्वयं ।

५०७ ॥ **हलो हृतः । ४ । ४ । १५४ ।** हलः परस्य हल्संबंधिनो यकारस्य खं भवति ङ्यां परतः । गार्गी । गार्ग्यौ । गार्ग्यः । इत्यादि ।

५०८ ॥ **फट् । ३ । १ । २० ।** यञंतान्मृदः स्त्रियां वर्तमानात् फट् त्यो भवति । टकारः स्त्रियां ङ्यर्थः । फस्यायन्, इञ्टिड्ढाणञित्यादिना ङी, णत्वं । गार्ग्यायणी । गार्ग्यायण्यौ । गार्ग्यायण्यः । इत्यादि । युवापत्यविवक्षायां–गर्गस्यापत्यं युवेति विगृह्य "यञिञः" इति गार्ग्यशब्दात् फण् । पूर्ववच्छेषं । गार्ग्यायणः । करीषस्येव गंधो यस्येति बसे–इवार्थस्य वृत्तावंतर्भावादिवशब्दस्याप्रयोगः । "सुपूत्युत्सुरभेर्गुणे गंधस्येः" इति वर्तमाने—

५०९ ॥ **वोपमानात् । ४ । २ । १७० ।** उपमानवाचिनः परस्य गंधस्य बसे सांत इकारादेशो भवति वा । तदा–करीषगंधेरपत्यमिति विगृह्य– तस्यापत्यमित्यण् । कारीषगंधः । एवं कौमुदगंधः । यदा न सांतस्तदा–करीषगंधस्यापत्यं "इञतः" इतीञ् । कारीषगंधिः । एवं–कौमुदगंधिः । स्त्रियां–

५१० ॥ **ष्योऽक्षु रूपांत्ययोर्गोत्रेऽनार्षेऽणिञोः । ३ । १ । ८४ ।** अक्षु मध्ये रूपांत्यौ गोत्रेऽनार्षे विहितौ यावणिञौ तदंतस्य वृद्धस्त्रियां वर्तमानस्य ष्य इत्ययमादेशो भवति । षकारः "ष्यस्येश बेऽहत्के मातरि" इति विशेषणार्थः । ततः टाप् । कारीषगंध्या । एवं–कौमुदगंध्या ॥ कुसुंभेन रक्तमिति विगृह्य—

५११ ॥ **तेन रक्तं रागात् । ३ । २ । १ ।** रज्यतेऽनेन स रागः । कुसुंभ..द्रव्यविशेषः । शुक्लस्य वर्णांतरापादनमिह रंजार्थः । तेनेति भासमर्थात् रागवाचिनो रक्तमित्येतस्मिन्नर्थे यथावि-

हितं त्यो भवति । इत्यण् । पूर्ववच्छेषं । कौसुंभः पटः । कौसुंभं वस्त्रं । कौसुंभी शाटी । एवं–काषायः । हारिद्रः ॥ लाक्षया रक्तमिति विगृह्य—

५१२ ॥ **लाक्षारोचनाट्ठण्** । ३ । २ । २ । लाक्षारोचनाभ्यां भासमर्थाभ्यां रक्तेऽर्थे ठण् भवति । "इकु ठः" इति ठस्येकादेशः । लाक्षिकः । एवं–रौचनिकः । पूर्ववत् त्रिषु लिंगेषु योज्यं । शकलेन रक्तमिति विगृह्य–

५१३ ॥ **शकलकर्दमाद्वा** । ३ । २ । ३ । शकलकर्दम इत्येताभ्यां भासमर्थाभ्यां रक्तार्थे ठण् वा भवति । पक्षेऽण् । पूर्ववदन्यत् ॥ शाकलिकः, शाकलः । एवं–कार्दमिकः, कार्दमः ॥ गुरूदयेन पुष्येण युक्तः संवत्सरः इति विगृह्य–तेनेति वर्तमाने–

५१४ ॥ **गुरूदयाद् भाद् युक्तोऽब्दः** । ३ । २ । ५ । गुरुर्बृहस्पतिरुदेति यस्मिन् नक्षत्रे तद्वाचिनो भासमर्थात् युक्त इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति योऽसौ युक्तः स चेदब्दः संवत्सरः स्यात् । इत्यण् । णरित्यम्वं । "तैषपौषं भे" इति यखं । पौषः संवत्सरः, पौषं वर्षं । एवं–फाल्गुनः संवत्सरः, फाल्गुनं वर्षं ॥ चंद्रोपेतेन पुष्येण युक्तः काल इति विगृह्य—

५१५ ॥ **चंद्रोपेतात्कालः** । ३ । २ । ६ । यस्य नक्षत्रस्य क्षेत्रे चंद्रो वर्तते तन्नक्षत्रं चंद्रोपेतं । तद्वाचिनो भासमर्थात् युक्त इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति योऽसौ युक्तः स चेत् कालो भवति । पूर्ववदन्यत् । पौषः कालः, पौषोऽहोरात्रः, पौषमहः, पौषी रात्रिः । एवं–माघः कालः, माघोऽहोरात्रः, माघमहः, माघी रात्रिः ॥ पौषी पौर्णमासी अस्य मासस्य इति विगृहे–

५१६ ॥ **सास्य पौर्णमासीति त्यो ३ । २ । २३** । सेति वासमर्थादस्येति तार्थे यथाविहितं त्यो भवति यद् तद् वांतं सा चेत् पौर्णमासी । इतिशब्दो विवक्षार्थस्तेन मासेऽर्द्धमासे संवत्सरे संवत्सरपर्वणि वा त्यः । त्यांतेन चेत्संज्ञा गम्यते । पूर्ववच्छेषं । पौषो मासः, पौषोऽर्द्धमासः, पौषः संवत्सरः । एवं—माघः ॥ अर्हन् देवताऽस्येति विगृहे—सास्येति वर्तमाने—

५१७ ॥ **देवता । ३ । २ । २६** । सेति वासमर्थादस्येति तार्थे यथाविहितं त्यो भवति यद् तद् वांतं सा चेत् देवता भवति । पूर्ववदन्यत् । आर्हतः । एवं—जैनः । ऐंद्रं हविः ॥ अग्निश्च विष्णुश्च देवताऽस्येति विगृह्य द्वंद्वे ङानि च कृते देवतार्थेऽण् । "इत्सिधुभगे द्वयोः" इति वर्तमाने—

५१८ ॥ **देवतानां ङानि ५ । २ । २६** । देवतानां द्वयोः पदयोः ङानि विषये ऐप् भवति । आग्नावैष्णवं । एवं—आग्निमारुतं आग्निवारुणं । "नैप्यविष्णिवंद्वे" इति ङानीत्वयोर्निषेधः । अग्नेंद्रौ देवतेऽस्येति विगृह्य—अण् ।

५१९ ॥ **नेंद्रवरुणरयात् । ५ । २ । २७** । अवर्णांतात् देवतार्थात् परस्य इंद्रशब्दस्य वरुणस्य चाचामादेरच ऐप् न भवति । आग्नेंद्रः । एवं—ऐंद्रावरुणः । त्रिलिंगेष्वपि योज्यं ॥ महेंद्रो देवतास्येति विग्रहे—

५२० ॥ **महेन्द्राद् घाण् च । ३ । २ । ३१** । महेन्द्रशब्दाद्देवतार्थे घ अण् इत्येतौ त्यौ भवतः चकाराच्छश्च । घस्य इय्, छस्य ईय् । महेंद्रियः । माहेंद्रः । महेंद्रीयः ॥ को देवताऽस्येति विग्रहे—

५२१ ॥ **कसोमाट्ट्यण् । ३ । २ । ३२** । कसोमाभ्यां दे-

वताऽर्थे अण् त्यो भवति । टकारो ङ्यर्थः । णकार ऐबर्थः । एः स्वात्परत्वादैप् । कार्यं हविः । एवं—सौम्यं । स्त्रियां टित्वान्ङी । कायी दिक् । सौमी । "हलो ह्यतः" इति खं ॥ वृकाणां समूह इति विग्रहे—

**५२२ ॥ तस्य समूहः ३ । २ । ३८ ।** तस्येति तासमर्थात् समूह इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति । इत्यण् । पूर्ववच्छेषं । वार्कं । एवं काकं । बार्हस्पत्यं । वानस्पत्यं । "यमदित्यदित्यादित्य-पतिभ्योण्योऽणपवादे चास्वे" इति ण्यः । आग्नेयः—कल्यग्नेर्ढणिति ढण्, एय् । हस्तिनां समूह इति विग्रहे—

**५२३ ॥ हस्तिकवच्यचिताच्च ठण् । ३ । २ । ४३ ।** हस्तिन् कवचिन् शब्दाभ्यां अचित्तवाचिभ्यः केदारशब्दाच्च तस्य समूह इत्यस्मिन् विषये ठण् भवति । ठस्य इक् । भस्याऽनोऽखं । "ङिति टेः" ह्यतीति च वर्तमाने—

**५२४ ॥ नः ४ । ४ । १४२ ।** नकारांतस्य गोर्भस्य टेः खं भवति ह्यति परतः । हास्तिकं । एवं—कवचिनां समूहः कावचिकं । अचित्तेभ्यः—अपूपानां समूहः—आपूपिकं । शाष्कुलिकं । केदाराणां समूहः—कैदारिकं ।

**५२५ ॥ धेनोरनञः ३ । २ । ४४ ।** धेनुशब्दात् समूहेऽर्थे ठण् भवति न चेत्स धेनुशब्दो नञः परो भवति ।

**५२६ ॥ दोसिसुसुगशश्वदकस्मात्तः कः ५ । २ । ६३ ।** दोस्शब्दात् इसुस् इत्येवमंताद् उगंताच्च शश्वद् अकस्माद् शब्द-वर्जितात् तकारांताच्च परस्य ठस्य ककारादेशो भवति । धैनुकं । अनञ इति किं ? आधेनवं ॥ निमित्तं वेत्तीति विगृह्य—

**५२७ ॥ तद् वेत्त्यधीते । ३ । २ । ७२ ।** तदिति इप्-समर्थात् वेत्तीत्यस्मिन् अधीते इत्येतस्मिंश्चार्थे यथाविहितं त्यो भवति । इत्यण् । नैमित्तः । एवं–मौहूर्तः । व्याकरणं वेत्तीति विगृह्य–तेनैवाणि–ओदैरैपि प्राप्ते–

**५२८ ॥ पदे य्व ऐयौव् । ५ । २ । ९ ।** पदे परतोऽचामादेरचः स्थाने निष्पन्नयोर्यकारवकारयोरैय् औव् इत्येतावादेशौ भवतो ञ्णिति परतः । वैयाकरणः । एवं–सौवागमः । सैद्धांतः । छान्दसः ॥ उदुम्बरा अस्मिन् देशे संतीति विगृह्य–

**५२९ ॥ सोऽत्रास्तीति देशः खौ ३ । २ । ८४ ।** स इति वासमर्थात् अत्रेतीत्यर्थे यथाविहितं त्यो भवति, योऽसौ वांतः स चेदस्ति, यः ईपानिर्दिष्टः स चेद्देशः, समुदायेन चेत्संज्ञा गम्यते । औदुंबरं राष्ट्रं । एवं–बाल्वजं, पार्वतं ॥ कुशाम्बेन निर्वृत्तेति विगृहे—

**५३० ॥ तेन निर्वृत्तः ३ । २ । ८५ ।** तेनेति भासमर्थात् निर्वृत्त इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति देशः खौ । इत्यण् । कौशाम्बी नगरी । कर्कंदेन निर्वृत्ता काकंदी । मकंदेन निर्वृत्ता माकंदी । सगरैः सागरः ॥ अर्जुनावो निवासः इति विगृह्य—

**५३१ ॥ तस्य निवासादूरभवौ ३ । २ । ८६ ।** तस्येति तासमर्थान्निवास इत्यस्मिन् अदूरभव इत्यस्मिंश्चार्थे यथाविहितं त्यो भवति । इत्यण् । आर्जुनावं नगरं । उदिष्टस्य निवास औदिष्टः । सकलाया निवासः साकलं नगरं । अदूरे भवोऽदूरभवः ।

तत्र-वराणसाया अदूरभवा वाराणसी नगरी । विदिशाया अदूरभवं वैदिशं नगरं ॥ चक्षुषा गृह्यते इति विगृह्य-

५३२ ॥ **शेषे** । ३ । २ । ९९ । अपत्यादिभ्यश्चतुरर्थान्तेभ्योऽन्यः शेषः । तस्मिन् शेषेऽर्थे विशेषे यथाविहितं त्यो भवति । इत्यण् । चाक्षुषं रूपं । एवं-श्रावणः शब्दः, रासनो रसः, दार्शनं, स्पार्शनं च द्रव्यं, दृषदि पिष्टा दार्षदाः सक्तवः ॥ सर्वस्मिन् लोके जातः कृतो भवो वेति विगृहे—

५३३ । **लोकदृत्त्वध्यात्मादिभ्यष्ठण्** ३ । २ । १६८ । लोकयोरध्यात्मादिभ्यश्च शेषे ठण् भवति । ठस्य इकः ।

५३४ ॥ **अनुशतिकादीनां** ५ । २ । २४ । अनुशतिक इत्येवमादीनां गूनामवयवयोः पूर्वोत्तरपदयोरचामादेरच ऐभवति इति ञ्णिति परतः । सार्वलौकिकः । पारलौकिकः । ऐहलौकिकः ॥ आत्मन्यधीति विगृहे-सुबर्थे हसे "अनः" इत्यः सांतः । "नः" इति टेः खे कृते--अध्यात्मं भवः-आध्यात्मिकः । एवं—आधिदैविकः । आधिभौतिकः ॥ समाने भव इति विगृह्य—

५३५ ॥ **समानात्तदादेश्च** ३ । २। १६९ । ठण् । पूर्ववदन्यत् । सामानिकः । एवं-सामानग्रामिकः । एवं-सामानदेशिकः ॥ श्रुघ्ने जात इति विगृह्य—

५३६ । **तत्र जातः** ३ । ३ । १ । तत्रेति ईप्समर्थात् जात इत्यस्मिन्नर्थे यथाविहितमणादयस्त्या भवंति । स्वजन्मन्यनपेक्षितपरव्यापारः कर्तृभूतो जातः । प्राग् द्रोरण्—स्रौघ्नः । एवं माथुरः ॥ उत्से जातः ।

५३७ । **उत्सादेश्चाञ्** । ३ । १ । ९७ । औत्सः । एवं औदवाहः ॥ राष्ट्रे जातः—

**५३८ ॥ राष्ट्रदूरोत्तराद् घेत्याहञ् ३। २। १००।** राष्ट्र दूर उत्तर इत्येतेभ्यां यथाऽसंख्यं घ एत्य आहञ् इत्येते स्या भवंति। इति घस्तस्य इय्–राष्ट्रियः। एवं—दूरे जातः–दूरेत्यः। उत्तरास्मिन् जातः—औत्तराहः॥ स्रुघ्ने कृतः लब्धः क्रीतः संभूतो वेति विगृह्य—तत्रेति वर्तमाने—

**५३९ ॥ कृतलब्धक्रीतसंभूताः ३। ३। १७।** तत्रेति ईप्समर्थात् कृतादिष्वर्थेषु यथाविहितमणादयस्याः भवंति। स्वभावनिष्पन्नत्वापेक्षितपरव्यापारः कर्मभूतो भावः कृतः, सामान्येन प्राप्तं लब्धं, मूल्येन संप्राप्तं क्रीतं, संभूतिः संभावना, अवक्लृप्तः तत्क्रियाकर्तृभूतः संभूतः। पूर्ववदणादयः। स्रौघ्नः, औत्सः, राष्ट्रियः, दूरेत्यः, औत्तराहः॥ कत्रौ जातः इति विग्रहे–

**५४० ॥ कत्र्यादेः। ३। २। १०४।** एभ्यो ढकञ् स्याच्छेषे। ढस्य एय्—कात्रेयकः। एवं–नद्यादेर्ढण्–नादेयः॥ स्रुघ्ने भवः इति विगृह्य—तत्रेति वर्तमाने—

**५४१ ॥ भवः। ३। ३। ३१।** तत्रेतीप्समर्थात् भव इत्यस्मिन्नर्थे यथाविहितमणादयस्याः भवंति। सत्तार्थो भवार्थः। पूर्ववच्छेषं। स्रौघ्नः, औत्सः, राष्ट्रियः, कात्रेयकः, नादेयः॥ दिशि भव इति विगृह्य—

**५४२ ॥ दिगादेर्यः ३। ३। ३२।** दिगित्येवमादिभ्यः ईप्समर्थेभ्यः शेषे भवार्थे यो भवति। दिश्यः। एवं-वर्गे भवः वर्ग्यः।

**५४३ ॥ देहांगात्। ३। ३। ३३।** देहावयवेभ्य ईप्समर्थेभ्यः शेषे भवार्थे यो भवति। अणादेरपवादः। कंठे भवः क-

ण्ञ्यः । एवं—ओष्ठ्यः, दंत्यः, पाण्यः, पद्यः ॥ अंतरगारे भव इति विगृह्य–हादिति वर्तमाने–

**५४४ ॥ अंतःपूर्वाट्ठञ् ३ । ३ । ४० ।** हसादंतःशब्दपूर्वात् भवार्थे ठञ् भवति। अगारस्यांतः अंतरगारं। "पारेमध्येऽन्तस्तया"इति हसः । पूर्ववदन्यत् । आंतरगारिकः। एवं-आंतर्गेहिकः, आंतःपुरिकः ॥ श्रुघ्नादागत इति विगृह्य–

**५४५ ॥ तत आगतः । ३ । ३ । ५६ ।** तत इति कासमर्थात् आगत इत्यस्मिन्नर्थे यथाविहितं त्यो भवति । शेषं पूर्ववत् । श्रौघ्नः, राष्ट्रियः, नादेयः ॥ शुल्कशालाया आगतमिति विगृह्य–ठणिति वर्तमाने–

**५४६ ॥ आयस्थानात् । ३ । ३ । ६० ।** स्वामिग्राह्यो भाग आयस्तस्योत्पत्तिस्थानवाचिनः कासमर्थात् आगतेऽर्थे ठण् भवति । पूर्ववच्छेषं । शौल्कशालिकं । एवं-आपणिकं । आकरिकं । गौल्मिकं ॥ श्रुघ्नो निवासोऽस्येति विगृह्य–

**५४७ ॥ सोऽस्य निवासः । ३ । ३ । ७४ ।** स इति वासमर्थात् निवास इत्यस्मिन्नर्थे यथाविहितं त्यो भवति । श्रौघ्नः । राष्ट्रियः । नादेयः । भद्रबाहुणा प्रोक्तमिति विगृह्य–

**५४८ ॥ तेन प्रोक्तं । ३ । ३ । ८५ ।** तेनेति भासमर्थात् प्रोक्तमित्यस्मिन्नर्थे यथाविहितं त्यो भवति । प्रकर्षेण व्याख्यातमध्यापितं वा प्रोक्तं । भाद्रबाहवाण्युत्तराध्ययनानि ॥ पाणिनिना प्रोक्तमिति विगृह्य—

**५४९ ॥ दोश्छः । ३ । २ । १२५ ।** दुसंज्ञकाच्छैषिकेऽर्थे छो भवति । छस्य ईय् । को दुः ?

५५० ॥ **यस्याच्चादिरेद्दुः** । १ । १ । ८३ । यस्य शब्दस्याचां मध्ये आदिरजैप् भवति स दुसंज्ञो भवति । इत्यादिना विहितः । पूर्ववच्छेषं । पाणिनीयं । पूज्यपादीयं । पाणिनीयं वेत्यधीते वेति विगृह्य—तद्वेत्त्यधीते" इत्यण् । प्रोक्तादित्युप् । पाणिनीयः छात्रः । एवं--पूज्यपादीयश्छात्रः ॥ समंतभद्रेण कृतमिति विगृह्य—

५५१ ॥ **कृते ग्रंथे** । ३ । ३ । ९९ । तेनेति भासमर्थात् कृते ग्रंथेऽर्थे यथाविहितं त्यो भवति । सामंतभद्रं वार्त्तिकं । वाररुचानि वाक्यानि ॥ उपगोरिदमिति विगृह्य—

५५२ ॥ **तस्य स्वं** । ३ । ३ । १०२ । तस्येति तासमर्थात् स्वमिति द्वितीये संबंधिनि यथाविहितमणादयस्त्या भवंति । पूर्ववच्छेषं । औपगवं । एवं—कापटवं । औत्सं । गांगं । वार्हस्पत्यं । राष्ट्रियं । कात्रेयकं । नादेयं ॥ भस्मनो विकार इति विगृह्य—

५५३ ॥ **तस्य विकारः** । ३ । ३ । १२३ । तस्येति तासमर्थात् विकार इत्यस्मिन् अर्थे यथाविहितमणादयो भवंति । तस्येति वर्तमाने पुनस्तस्यग्रहणं शेष इत्यस्य निवृत्यर्थं । "नः" इति टेः खं प्राप्तं " अनः" इति प्रतिषिद्धं । भास्मनः । एवं—मार्त्तिकः ॥ अक्षैर्दीव्यतीति विग्रहे—प्राग्याट्ठणिति वर्तमाने—

५५४ ॥ **तेन दीव्यत्खनज्जयज्जितं** । ३ । ३ । १५३ । तेनेति भासमर्थात् दीव्यति खनति जयति जिते चार्थे ठण् भवति । आक्षिकः । एवं—शालाकिकः । अभ्र्या खनति आभ्रिकः । एवं कौद्दालिकः । पाशकैर्जयति जितो वा पाशकिकः । आक्षिकः ।

तेनेति करणे भैषा नान्यत्रानभिधानतः॥ दध्ना संस्कृतमिति विगृह्य—

५५५ ॥ **संस्कृतं** । ३ । ३ । १५४ । तेनेति भासमर्थात् संस्कृतमित्यस्मिन्नर्थे ठण् भवति । सतः उत्कर्षाधानं संस्कारः । दाधिकं । एवं-शार्ङ्ग्वेरिकं । मारीचिकं । औपाध्यायः शिष्यः । वैदिकः॥ उडुपेन तरति इति विगृह्य—

५५६ ॥ **तरन्** । ३ । ३ । १५६ । तेनेति भासमर्थात् तरत्यर्थे ठण् भवति । औडुपिकः । कांडप्लाविकः । गौपुच्छिकः । हस्तिना गच्छतीति विगृह्य-

५५७ ॥ **चरन्** । ३ । ३ । १५८ । तेनेति भासमर्थात् चरति गच्छति भक्षयति चार्थे ठण् भवति । हास्तिकः । एवं शाकटिकः । दध्ना भक्षयति दाधिकः । एवं-शार्ङ्ग्वेरिकः ॥ शब्दं करोतीति विगृह्य-

५५८ ॥ **शब्ददर्दुरललाटकुक्कुटाद् रूढौ** । ३ । ३ । २०१ । शब्द दर्दुर ललाट कुक्कुट इत्येतेभ्यः इप्समर्थेभ्यष्ठण् भवति रूढौ रूढिक्रियाभिधे विषये । शाब्दिकः वैयाकरणः । शब्दमविनष्टं जानन्नुच्चरतीत्यर्थः । एवं-दर्दुरं वादित्रं करोतीति दार्दुरिकः । ललाटं पश्यतीति लालाटिकः सेवकः । कुक्कुटीं पश्यतीति कौक्कुटिकः । कुक्कुटीवाल्पेन देशेन गच्छन् संयतो भिक्षुरुच्यते ॥ अपूपाः पण्यमस्येति विगृहे-

५५९ ॥ **तदस्य पण्यं** । ३ । ३ । २०६ । तदिति वासमर्थात् अस्येति तार्थे ठण् भवति यत्तद् वांतं तच्चेद् पण्यं भवति । आपूपिकः । शाष्कुलिकः । लाड्डुकिकः । पण्यार्थस्य वृत्तावंतर्भावात् तदप्रयोगः ॥ नृत्तं शिल्पमस्येति विगृहे—तदिति वर्तमाने—

**५६० ॥ शिल्पं । ३ । ३ । २०९ ॥** तदिति वासमर्थात् अस्येति तार्थे ठण् भवति यद् तद् वांतं तच्चेच्छिल्पं विज्ञानं भवति । नार्तिकः । वादनिकः । मृदङ्गवादनं शिल्पमस्येति मार्दङ्गिकः । मौरजिकः । पाणविकः । वादनशिल्पार्थयोर्वृत्तावंतर्भावादप्रयोगः ॥ अपूपाः शिल्पमस्येति-तदस्येति वर्तमाने—

**५६१ ॥ शीलं । ३ । ३ । २१६** । तादिति वा समर्थात् अस्येति तार्थे ठण भवति यत्तद्वांतं तेच्चच्छीलं स्वभावो भवति । आपूपिकः । तद्भक्षणशील इत्युच्यते । तत्स्थस्य ताच्छब्दयात् । एवं—शाष्कुलिकः । ताम्बूलिकः ॥ छत्रं शीलमस्येति विग्रहे—

**५६२ ॥ छत्रादेरञ् । ३ । ३ । २१७** । छत्र इत्येवमादिभ्यस्तदस्य शीलमित्यस्मिन् विषये अञ् भवति । छात्रः । छत्रवत् गुरुच्छिद्राच्छादनप्रवृत्तः शिष्यः उच्यते । एवं शिक्षाशीलः शैक्षः । भिक्षाशीलः भैक्षः । शुल्कशालायां नियुक्त इति विगृह्य—

**५६३ ॥ तत्र नियुक्तः । ३ । ३ । २२६** । तत्रेतीप्समर्थात् नियुक्त इत्यस्मिन्नर्थे ठण् भवति । नियुक्तोऽधिकृतो व्यापृत इत्यर्थः । शौल्कशालिकः । आपणिकः । आक्षपटलिकः । दौवारिकः—"द्वारादेः" इत्यैाव् । रथं वहतीति विगृह्य—

**५६४ ॥ तद् वहन् रथप्रासंगाद्यः ॥ ३ । ३ । २३२** । तदितीप्समर्थात् रथशब्दात् प्रासंगशब्दाच्च वहत्यर्थे यस्त्यो भवति । रथ्यः । वत्सानां स्कंधे प्रासज्यते इति प्रासंगो युक्तः । तद्वहति प्रासंग्यः ॥ धुरं वहानीति विगृह्य—

**५६५ ॥ धुरो ढण् च ३ । ३ । २३३** । धुर इत्येतस्मादिप्समर्थात् वहत्यर्थे ढण् भवति यश्च । धौरेयः । धुर्यः ॥ सामानि साधुरिति विगृह्य—

**५५६ ॥ तत्र साधुः ३ । ३ । २४९ ।** तत्रेतीप्समर्थात् साधुरित्यस्मिन्नर्थे यो भवति । "नः" इति टेः खं प्राप्तं—

**५६७ ॥ येऽङ्गौ ४ । ४ । १७८ ।** भावकर्मभ्यामन्यत्र ये टिखं न भवति । सामन्यः । एवं-वेमन्यः । कर्मण्यः । शरण्यः । सभ्यः । साधुः समर्थः प्रवीणः उपकारको वा । वत्सेभ्यो हितमिति विग्रहे-

**५६८ ॥ तस्मै हितेऽराजाचार्यब्राह्मणवृष्णः ३ । ४ । ७ ।** तस्मा इत्यप्समर्थात् राजादिवर्जितात् हित इत्यस्मिन्नर्थे यथाविहितं प्राक् ठणश्छ इत्यादिस्त्यो भवति । वत्सीयः । करभीयः । उष्ट्रीयः । पित्रीयः ।

**५६९ ॥ युगाद्योर्यः । ३ । ४ । ३ ।** युगादेरुवर्णांताच्च मृदो यस्त्यो भवति । युग्यः । पिचव्यः कार्पासः ।

**५७० ॥ प्राण्यंगरथखलयवमाषवृषब्रह्मतिलाद्यः । ३ । ४ । ८ ।** प्राण्यंगवाचिभ्यो रथादिभ्यश्च तस्मै हित इत्यस्मिन् विषये यो भवति । दंतेभ्यो हितः दंत्यः । एवं-कर्ण्यं । चक्षुष्यं । नाभ्यं तैलं । रथ्या भूमिः । खल्यमग्निरक्षणं । यव्यस्तुषारः । माष्यो वारः । वृष्यं क्षीरपानं । ब्रह्मण्यो देशः । तिल्यं वात्या ॥ सप्तत्या क्रीतमिति विगृहे-

**५७१ ॥ मूल्यैः क्रीतं । ३ । ४ । ४५ ।** मूल्यवाचिनो निर्देशादेव भांतान्मृदः क्रीतमित्यस्मिन्नर्थे यथाविहितं अर्हाट्ठण् इत्येवमादयस्त्याः भवंति ॥ साप्ततिकं । आशीतिकं । नैष्किकं । पाणिकं । प्रस्थस्य वाप इति विग्रहे-

**५७२ ॥ तस्य वापः । ३ । ४ । ४६ ।** तस्येति तास-

मर्थात् वाप इत्यस्मिन्नर्थे यथाविहितं त्यो भवति। इति ठण्। प्रास्थिकं। कौटुंबिकं। द्रौणिकं॥ राजानमर्हतीति विग्रहे–

५७३॥ इपोऽर्हे वत् कृत्ये। ३। ४। १३२ इप इतीप्समर्थात् अर्ह इत्यस्मिन् अर्थे वत् भवति यत्तदर्ह इति तच्चेत्कृत्यं कर्तव्यं क्रिया भवति। राजवत् वृत्तमस्य राज्ञः। राजतायोग्यमस्य राज्ञः वृत्तमित्यर्थः। एवं–कुलीनवत्। साधुवत्।

५७४॥ सुप इवे। ३। ४। १३३। सुबंतादिवार्थे वत् भवति। सादृश्यमिवार्थः। तच्चेद् सादृश्यं कृत्यं क्रिया विषयं भवति। क्षत्रिय इव क्षत्रियवद् युध्यते। देवमिव देववद् गुरुं पश्यति। साधुनेव साधुवदाचरितं देवदत्तेन। पात्राय इव पात्रवद् अपात्राय दत्तं। पर्वतादिव पर्वतवत् कुतुपादवरोहति।

५७५॥ तत्र। ३। ४। १३४। तत्रेतीप्समर्थात् इवार्थे वद् भवति। मथुरायामिव मथुरावन्मान्यखेटे प्रासादाः। पाटलिपुत्रवत् साकेते परिखा। अक्रियार्थोऽयमारंभः।

५७६॥ तस्य। ३। ४। १३५। तस्येति तासमर्थात् इवार्थे वद् भवति। देवदत्तस्येव देवदत्तवत् जिनदत्तस्य गावः। राजवत् जिनदत्तस्य दंताः।

५७७॥ भावे त्वतल्। ३। ४। १३६। तस्येति तासमर्थात् भावेऽभिधेये त्वतल् इत्येतौ त्यौ भवतः। भवतोऽस्मादभिधानप्रत्ययौ इति भावः। शब्दप्रत्ययप्रवृत्तिनिमित्तं वा भावः। त्वांतं स्वभावतो नपुंसकलिंगं। तलंतः स्त्रीलिंगः। गोर्भावः गोत्वं। गोता। अत्र सामान्यं भावः। शुक्लत्वं, शुक्लता पटस्य–अत्र गुणः। शुक्लत्वं शुक्लता रूपस्य-अत्र गुणसामान्यं। पाचकत्वं पाचकता। औप-

गवत्वं । औपगवता । राजपुरुषत्वं । राजपुरुषता । अत्र संबंधः । देवदत्तत्वं । देवदत्तता । डित्थत्वं । डित्थता—अत्र संज्ञासंज्ञित्वं संबधः । शब्दस्वरूपं वाल्यादिपर्यायान्वयवस्तुस्वरूपं वा भावः ॥ सुराज्ञो भावः कर्म वा इति विगृह्य—

**५७८ ॥ राजपत्यंतगुणोक्तिराजादिभ्यः कृत्ये च ३ । ४ । १४१** । राजान्तेभ्यः पत्यंतेभ्यो गुणवाचिभ्यो राजादिभ्यश्च द्वन्द्वेभ्यस्तस्येति तांतेभ्यः कृत्ये कर्तव्ये कर्मणि क्रियायां भावे च ष्यण् भवति । टकारो ङ्यर्थः ।

**५७९ ॥ आत्वादगडुलादेः । ३ । ४ । १३७** । गडुलादिवर्जितात् त्वतलावाधिकृतावाब्रह्मणस्त्व इति त्वशब्दात् पूर्वं । इति पक्षे त्वतलौ भवतः । सौराज्यं । न इति टिखं । सुराजत्वं । सुराजता । एवं—यौवराज्यं । युवराजत्वं । युवराजता । पत्यंतेभ्यः— बृहस्पतेर्भावः कृत्यं कर्म वा बार्हस्पत्यं । बृहस्पतित्वं । बृहस्पतिता । गुणे उक्तिर्येषां ते गुणोक्तयः । गुणद्वारेण च ये द्रव्यवृत्तयस्तेभ्यः जडस्य भावः कृत्यं वा जाड्यं । जडत्वं । जडता । मौर्ख्यं । मूर्खत्वं । मूर्खता । राज्ञो भावः कृत्यं वा राज्यं, राजत्वं । राजता । कवेर्भावः कृत्यं वा काव्यं । कवित्वं । कविता ॥ तारकाः संजाता अस्य इति विगृहे—

**५८० ॥ तदस्य संजातं तारकादिभ्य इतः । ३ । ४ । १९७** । तारकादिभ्यस्तदस्य संजातमित्यस्मिन् विषये इत इत्ययं त्यो भवति । तारकितं नभः । पुष्पितं । कुसुमितं । पल्लवितं ॥ ऊरु प्रमाणमस्येति विगृहे—

**५८१ ॥ प्रमाणे मात्रट् । ३ । ४ । १९९** । तदिति वा समर्थात् प्रमाणे वर्तमानात् अस्येति तार्थे

मात्रट् भवति । टकारो ङयर्थः । प्रमाणमायाममानं । तद् द्विविधं । उत्सेधमानं, शय्यामानं च । तत्रोर्ध्वमाने-ऊरुमात्रमुदकं । ऊरुमात्री परिखा । तिर्यग्माने--धनुर्मात्री भूमिः ॥ हस्ती प्रमाणमस्येति विगृहे -

५८२ ॥ हस्तिपुरुषाद् वाऽण् । ३ । ४ । २०० ।

तदिति वासमर्थात् प्रमाणवाचिनो हस्तिन्शब्दात् पुरुषशब्दाच्च तार्थे अण् भवति वा । पक्षे प्राप्तं च । न इति टिखं प्राप्तं "अनपत्येऽणीनः" इति निषिद्धं । हास्तिनं जलं, हस्तिमात्रं । पौरुषं, पुरुषमात्रं ॥ ऊरु प्रमाणमस्येति विगृहे–

५८३ ॥ वोर्ध्वे दघ्नट्द्वयसट् । ३ । ४ । २०१ ।

ऊर्ध्वे प्रमाणे वर्तमानात् मृदो वांतादस्येति तार्थे द्वयसट् दघ्नट् इत्येतौ त्यौ वा भवतः । पक्षे मात्रट् । टकारो ङयर्थः । ऊरुद्वयसं । ऊरुदघ्नं । ऊरुमात्रं जलं । हास्तिद्वयसं । हास्तिदघ्नं । हस्तिमात्रं । पुरुषद्वयसं । पुरुषदघ्नं । पुरुषमात्रं । इदं मानमस्येति विगृहे—

५८४ ॥ घत्विदंकिमः । ३ । ४ । २०७ । इदंशब्दात् किम्शब्दाच्च मानवृत्तेस्तदस्येत्यस्मिन् विषये घतु इत्ययं त्यो भवति । उकार उगिद्कार्यार्थः । मानं चतुर्विधं । ऊन्मानं निष्कादि । परिमाणं प्रस्थादि । प्रमाणं वितस्त्यादि । संख्या च एकत्वादीति । घस्य इय् ।

५८५ ॥ किमिदमः कीश् ४ । ३ । २५४ किम् इदम् इत्येतयोर्यथासंख्यं की इश् इत्येतावादेशौ भवतः घतुदृग्दृशदृक्षेषु घुषु परतः । एरिति खं । नुम्यस्फांतसुखानि । इयान्निष्कः । इयद्धान्यं, इयती शाटी । इयन्तो गुणिनः । एवं-कियान्, कियत्, कियती, कियन्तः ।

५८६ ॥ **वैतदो घः । ३ । ४ । २०८ ।** एतदः परस्य घतोरादेर्घकारस्य वकारादेशो भवति ।

५८७ ॥ **आः । ३ । ४ । २०८ ।** घतुदृग्दृशदृक्षेषु परतः पूर्वस्यात्वं भवति । इति दकारस्यात्वं । एतन्मानमस्येति विगृहे– एतावान्निष्कः । एतावद्धान्यं । एतावती शाटी । एतावंतो गुणिनः ।

५८८ ॥ **यत्तदः । ३ । ४ । २०९ ।** यत्तद्भ्यां परस्य घतोर्घकारस्य वकारादेशो भवति । पूर्ववच्छेषं । यन्मानमस्य यावान् । यावत् । तावान् । तावत् । ज्ञापकमिदमेवादेशवचनमेतत्-- यत्तद्भ्यो घतुर्भवतीति ॥ चत्वारोऽवयवा अस्येति विगृह्य– स्येरिनि वर्तमाने--

५८९ ॥ **अवयवे तयट् । ३ । ४ । २११ ।** स्यिसंज्ञावाचिनोऽवयवे वर्तमानात् वांतात् अस्येति तार्थेऽवयविनि तयट् भवति । टकारो ङ्यर्थः । स्वादावधे इति पदत्वे रेफस्य "छवि"इति सत्वं ।

५९० ॥ **प्रात्सुपस्त्ये । ५ । ४ । ७८** प्रात्परस्य सकारस्य सुबंताद्विहिते तकारादौ त्ये परतः षत्वं भवति । इति षत्वं । चतुष्टयं । चतुष्टयं समन्तभद्रस्य । चतुष्टयशब्दानां प्रवृत्तिः । पंचतयो यमः । दशतयो धर्मः ॥ एकादशानां पूरण इति विगृहे–

५९१ ॥ **तस्य स्यिपूरणे डट् । ४ । १ । १ ।** तस्येति तासमर्थात् स्यिसंख्यावाचिनः स्यिसंज्ञापूरणेऽभिधेये डट् त्यो भवति । टकारो ङ्यर्थः । डकारष्टिखार्थः । एकादश । एवं–द्वादश । त्रयोदश । एकादशी तिथिः ॥ पंचानां पूरण इति विगृहे–

५९२ ॥ **नोऽसे मट्** । ४ । १ । २ । नकारांतात् स्यि-संज्ञावाचिनो मृदः स्यिपूरणे मडित्ययं त्यो भवत्यसे । पंचमः । सप्तमः । पंचमी तिथिः ॥ षण्णां पूरणमिति विगृह्य—

५९३ ॥ **षट्कतिकतिपयस्य थुक्** । ४ । १ । ५ । षट् कति कतिपय इत्येतेषां थुगागमो भवति डटि परतः । टुत्वं । षष्ठः । षष्ठी तिथिः । कतिथः । कतिपयथः । ज्ञापकमिदमेव डटि थुग्वचनं-कतिपयादपि डट् भवतीति ॥ चतुर्णां पूरण इति विगृह्य—

५९४ ॥ **चतुरः** । ४ । १ । ६ । चतुर् इत्येतस्य थुगागमो भवति डटि परतः । चतुर्थः । चतसृणां पूरणी चतुर्थी । तसादित्वात् पुम्भावः ।

५९५ ॥ **छयौ चखञ्च** । ४ । १ । ७ । चतुर् इत्येतस्मात् छयौ त्यौ भवतश्चकारस्य खं । तुरीयः । तुरीया । तुर्यः । तुर्या । एवं चतुरस्त्रिरूप्यं ॥ द्वयोः पूरण इति विग्रहे—

५९६ ॥ **द्वेस्तीयः** । ४ । १ । ८ । द्वि इत्येतस्मात् तीयो भवति । डटोऽपवादः । द्वितीयः । द्वितीया ॥

५९७ ॥ **त्रेस्तृ च** । ४ । १ । ९ । त्रि इत्येतस्मात् तीयो भवति त्रेश्च तृ इत्ययमादेशो भवति । त्रयाणां पूरणः तृतीयः । तृतीया ॥ गावोऽस्य संतीति विगृह्य—

५९८ ॥ **तदस्यास्त्यस्मिन्निति मतुः** । ४ । १ । ४० । तदिति वासमर्थात् अस्तीत्येवमर्थविशिष्टात् अस्येति तार्थे अस्मिन्निती्यर्थे वा मतुर्भवति । उकार उगिद्कार्यार्थः । पूर्ववच्छेपं । गोमान् । एवं-श्रीमान् । वृक्षा अस्मिन् संति—वृक्षवान् ,प्लक्षवान् पर्वतः ।

५९९ ॥ **मयोर्झयो मतोर्वोऽयवादिभ्यः** । ५ । ३ । ४६

मकारांतादवर्णांतान्मकारोङोऽवर्णोङो झयंताच्च परस्य मतोर्वकारादेशो भवति यवादीन् वर्जयित्वा । किंवान् । गुणवान् । शालावान् । शमीवान् । अर्हवान् । विद्युत्वान् । इति करणो विवक्षार्थः । तेन—

भूमनिंदाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां प्रायो मत्वादयो मताः ॥

भूमा प्राचुर्यं तस्मिन् भूम्नि—गोमान् । निंदायां--ककुदावती । प्रशंसायां--शीलवती । नित्ययोगे—क्षीरिणो वृक्षाः । अतिशायने—उदरिणी कन्या । संसर्गे--दंडी । छत्री । भूमादिदर्शनं प्रायः किं ? सत्तामात्रेऽप्ययं दृश्यते । व्याघ्रवान् पर्वतः । स्पर्शरसगंधवर्णवंतः पुद्गलाः । वागस्यास्त्यस्मिन् वेति विगृह्य—

**६०० ॥ वाचो ग्मिन्** । ४ । १ । ४५ । वाच इत्येतस्मात् मत्वर्थे वा ग्मिन् भवति । अत्र गकार इत् । गकारादित्वात् "त्ये" इति सूत्रेण पूर्वस्य अनुनासिकादेशो न भवति । गकारो नासिक्यनिवृत्यर्थः । वाग्मी । वाग्वान् ।

**६०१ ॥ क्षिप्यालाटौ** । ४ । १ । ४६ । वाच इत्येतस्माद् मत्वर्थे क्षिपि क्षेपे गम्यमाने आल आट इत्येतौ त्यौ भवतः । वाचालः । वाचाटः । यः फल्गु भाषते स एवं क्षिप्यते ॥ माया अस्यास्त्यस्मिन्निति वा विगृह्य—

**६०२ ॥ मायाऽऽमयामेधास्रक्तपोऽसो विन्** । ४ । १ । ७४ । माया आमया मेधा स्रज् तपस् इत्येतेभ्योऽसंतेभ्यश्च मृद्भ्यो मत्वर्थे विन् वा भवति । मायावी । आमयावी । अत एव निपातनाद्दीर्घत्वं । मेधावी । स्रग्वी । तपस्वी । यशस्वी । वर्चस्वी । वचस्वी । मत्वर्थे स्तावित्ति भसंज्ञायां पदकार्यं रित्वादि न भवति ।

पक्षे तु मतुः । मायावान् । आमयावान् । मेधावान् । स्रग्वान् । ताप-
सः—ज्योत्स्नादित्वादण् । यशस्वान् । यशस्वती । सरस्वती ॥ नौर-
स्यास्त्यस्मिन्निति वा विगृह्य--

६०३ ॥ **नौशिखादिभ्यां ठेनौ** । ४ । १ । ७५ ।
नावादिभ्यश्शिखादिभ्यश्च यथासंख्यं मत्वर्थे ठ इन् इत्येतौ त्यौ
वा भवतः । पूर्ववच्छेषं । नाविकः । नौमान् । कुमारिकः ।
कुमारीवान् । एवं-शिखी । शिखावान् । माली । मालावान् ।

६०४ ॥ **अतोऽनेकाचः** । ४ । १ । ७६ । अकारांता-
दनेकाचो मृदो मत्वर्थे वा ठेनौ त्यौ भवतः । दंतोऽस्यास्तीति
दंतिकः । दंती । दंतवान् । छत्रिकः । छत्री । छत्रवान् ॥ अतः
परं प्रायशः स्वार्थिकास्त्याः । तत्र विशेषणं प्रकृतेर्विज्ञायते । तच्च
त्येन द्योत्यते ।

६०५ ॥ **किंस्निबहोरद्व्यादिवैपुल्यात्** । ४ । १ ।
१०८ । किम्शब्दात स्निसंज्ञकात् द्व्यादिवर्जितात् बहुशब्दा-
च्चावैपुल्यवाचिनो वक्ष्यमाणास्त्याः भवंति । इत्ययमधिकारः "ते
सुपः" इत्यतः प्राग् वेदितव्यः इति वर्तमाने-

६०६ ॥ **कायास्तस्** । ४ । १ । ११३ । किमादि-
भ्यः कांतेभ्यस्तस् भवति । कस्मादिति विगृह्य—तस् । पूर्वस्य सुपः
उप् । "ते सुपः" इति सुप्संज्ञायां पुनस्त्यदादिकार्ये । कुस्तसोरिति
कादेशः । कुतः । एवं-सर्वस्मात्--सर्वतः । विश्वतः । यतः । ततः ।
अस्मात्—इतः । इदम इशिति इशादेशः । एतस्माद् अतः ।

६०७ ॥ **अश्** ४ । १ । ११२ । एतदोऽशित्यादेशः स्यात् ।
शकारः सर्वादेशार्थः । बहुभ्यः--बहुतः । तसादाविति पुंभावे स्त्रिया-
मप्येवं रूपं । तसाद्यंतस्य झित्वात् सुप उप् ॥

६०८ ॥ **ईपस्त्रः । ४ । १ । ११६ ।** किमादिभ्योऽह्व्यादिवर्जितादीबंतात् त्र इत्ययं त्यो भवति । सर्वस्मिन् सर्वत्र । यत्र । तत्र । बहुषु बह्वीषु वा बहुत्र ॥

६०९ ॥ **किमोऽश्च । ४ । १ । ११७ ।** किम्शब्दादीबंतात् अश् इत्ययं त्यो भवति त्रश्च । कस्मिन् क्व । कुत्र ॥

६१० ॥ **इदमो हः । ४ । १ । ११८ ।** इदम्शब्दादीबंतात् ह इत्ययं त्यो भवति । अस्मिन्-इह । त्रापवादोऽयं ।

६११ ॥ **भवत्वायुष्मद्दीर्घायुर्देवानांप्रियैकार्थाच्च । ४ । १ । ११९ ।** भवतु आयुष्मद् दीर्घायुस् देवानांप्रिय इत्येतत्समानाधिकरणात् किंस्त्रित्रहोरह्व्यादिवैपुल्यात् सुब्मात्रांतात् त्रत्यो भवति तश्च । स भवान् । तत्र भवान् । ततो भवान् । स आयुष्मान्, तत्रायुष्मान्, तत आयुष्मान् । स दीर्घायुः, तत्र दीर्घायुः, ततो दीर्घायुः । स देवानांप्रियः, तत्र देवानांप्रियः, ततो देवानांप्रियः । एवमुत्तरत्रापि योज्यं । सर्वविभक्तीषु नेयं ॥

६१२ ॥ **कालेऽनद्यतने र्हिः । ४ । १ । १२० ।** किमादेरीबंतादनद्यतने काले यथासंभवं वर्तमानात् र्हित्यो भवति । कस्मिन् अनद्यतने काले कर्हि । यर्हि । तर्हि । काले इति किं ? कस्मिन्नद्यतने भोजने--कुत्र । यत्र । अनद्यतने इति किं ? कस्मिन् काले-कदा । यदा ॥

६१३ ॥ **इदमः । ४ । १ । १२१ ।** काले वर्तमानादीबंतात् इदमो र्हित्यो भवति । अस्मिन् काले एतर्हि ।

६१४ ॥ **एतेतौ र्थोः । ४ । १ । ११० ।** रेफादौ थकारादौ च त्ये परतः इदमः एतेतादेशौ भवतः ॥

६१५ ॥ **अधुना** । ४ । १ । १२२ । काले वर्तमानादी-बंतात् इदमः अधुना त्यो भवति । अस्मिन् काले--अधुना । इदम इश् । एरिति खं ।

६१६ ॥ **दानीं** । ४ । १ । १२३ । काले वर्तमानादिदम ईबंतात् दानीमित्ययं त्यो भवति । अस्मिन् काले इदानीं ।

६१७ ॥ **तदः** । ४ । १ । १२४ । तच्छब्दात् काले वर्तमानादीबंतात् दानीमित्ययं त्यो भवति । तस्मिन् काले तदानीं ।

६१८ ॥ **यत्किंतत्सर्वैकान्याद्दा** । ४ । १ । १२५ । यत् किम् तत् सर्व एक अन्य इत्येतेभ्यः काले वर्तमानेभ्यः ईबंतेभ्यो दात्यो भवति । यस्मिन् काले यदा । कदा । तदा । सर्वदा । एकदा । अन्यदा । काले इति किं ? यत्र । क्व । तत्र ।

६१९ ॥ **सदासद्यः** । ४ । १ । १२६ । सदा सद्यस् इत्येतौ शब्दौ निपात्येते । सर्वशब्दादीबंतात् काले वर्तमानात् दात्यो निपात्यः सभावश्च । सर्वस्मिन् काले सदा । सद्यः इति समानशब्दाद् द्यस्त्यः सभावश्च, समाने काले सद्यः । समानेऽहनि इति वा सद्यः ।

६२० ॥ **प्रकारे था** । ४ । १ । १३१ । यथाविहितं सुप्संबंधः । सामान्यस्य भेदाभेदांतरानुवृत्तः प्रकारः । तत्र वर्तमानात् किमादेरद्व्यादिवैपुल्याद् यथासंभवं सुबंतात् थात्यो भवति । सर्वेण प्रकारेण सर्वथा । यथा । तथा ॥

६२१ ॥ **कथमित्थं** । ४ । १ । १३२ । कथमित्थमिति किमिदंभ्यामेतदश्च प्रकारे थमिति त्यो निपात्यते । केन

प्रकारेण कथं। अनेन, एतेन च प्रकारेण इत्थं। एतेतौ थोरिति इदमेतदोस्थकारादाविदादेशो भवति ॥

६२२ ॥ **स्येर्विधार्थे धा** । ४ । १ । १४८ । स्यिसंज्ञकाच्छब्दाद् विधार्थे प्रकारे धात्यो भवति । एकेन प्रकारेण एकधा। द्विधा । त्रिधा । चतुर्धा । पंचधा । बहुधा ॥

६२३ ॥ **याप्ये पाशः** । ४ । १ । १५४ । याप्यंतेऽपनीयंतेऽस्माद् गुणा इति याप्यो निंद्यस्तस्मिन् अर्थे वर्तमानान्मृदः स्वार्थे पाश इत्ययं त्यो भवति । याप्यो वैयाकरणो वैयाकरणपाशः । तार्किकपाशः ॥

६२४ ॥ **तमः प्रकृष्टे मिङश्च** । ४ । १ । १६० । मिङंतान्मृदश्च प्रकृष्टे प्रकर्षवत्यर्थे वर्तमानात् स्वार्थे तम इत्ययं त्यो भवति । सर्वे इमे पचंत्ययमेषां प्रकृष्टं पचतीति तमः ।

६२५ ॥ **इयेनुर्मिङ्किंझादामद्रव्ये** । ४ । २ । १८। झिसंज्ञकादेकारांतात् मिङः किम्शब्दाच्च परो यो झस्तमतरौ तदंतात् आमित्ययं त्यो भवति न चेत्स द्रव्ये वर्तते । इति आम् । पचतितमां देवदत्तः । आमंतस्य झित्वात्सोरुप् । एवं—पचतस्तमां। पचंतितमां ॥ सर्वे इमे शुक्लाः अयमेषां प्रकृष्टः शुक्लः शुक्लतमः । आढ्यतमः । साधकतमः ॥

६२६ ॥ **द्विविभज्ये तरः** । ४ । १ । १६१ । द्वयोरर्थयोस्तद्गुणयोर्मध्ये यः प्रकृष्टस्तस्मिन् विभज्ये विभक्तव्ये च प्रकृष्टेऽर्थे वर्तमानान्मिङंतात् मृदश्च तरस्त्यो भवति । तमोऽपवादः । द्वाविमौ पचतः, अयमनयोः प्रकृष्टं पचति पचतितरां । पठतितरां । अधीतेतरां । पूर्ववदाम् । द्वाविमौ पटू । अयमनयोः प्रकृष्टः—पटुतरः । पाचकतरः ।

विभज्ये-मिङः-सांकाश्यकेभ्यः पाटलिपुत्रकाः पचंतितरां, पचंतेतरां । मृदः-सांकाश्यकेभ्यः पाटलिपुत्रकाः आढ्यतराः, अभिरूपतराः । बहव इमे पटवः अयमेषां प्रकृष्टः पटुः, द्वाविमौ पटू अयमनयोः प्रकृष्टः पटुरिति च विगृह्य--पूर्वेण सूत्रद्वयेन विहितयोः--

६२७ ॥ **गुणांगाद्वेष्ठेयसू** । ४ । १ । १६३ । गुणांगमप्रधानं यस्य तस्माद् गुणांगाद् गुणमभिधाय द्रव्ये वर्तमानाच्छब्दात् परयोस्तमतरयोः स्थाने यथासंख्यं इष्ठ ईयसु इत्येतावादेशौ भवतः । तुरिष्ठेयस्सु''टेरिति टिखं । उकार उगित्कार्यार्थः । पटिष्ठः । पटीयान् । अघिष्ठः । अघीयान् ॥

६२८ ॥ **प्रशस्यस्य श्रः** । ४ । १ । १६४ । प्रशस्यशब्दस्य श्र इत्ययमादेशो भवति इष्ठेयस्वोः परतः । सर्वेषामयं प्रशस्यः--श्रेष्ठः । अयमनयोरस्माद् वा प्रशस्यः--श्रेयान् ॥

६२९ ॥ **प्रशस्ते रूपः** । ४ । १ । १७० । मिङंतान्मृदश्च प्रशस्तेऽर्थे वर्तमानात् रूप इत्ययं त्यो भवति । प्रशस्तं पचति-पचतिरूपं । पचतोरूपं । पचंतिरूपं । प्रशस्तो वैयाकरणः, वैयाकरणरूपः । पंडितरूपः । दर्शनीयरूपेति तसादित्वात् पुंभावः ।

६३० ॥ **आसिद्धेऽझादेर्देश्यदेशीयकल्पाः** ।४। १। १७१ मिङंतात् ङ्याम्मृदश्च झाद्यंतवर्जितात् आसिद्धेऽर्थे वर्तमानात् स्वार्थे देश्य देशीय कल्प इत्येते त्या भवंति । आसिद्धमीषत्समाप्तं पचति पचतिदेश्यं । पचतिदेशीयं । पचतिकल्पं । आसिद्धः पटुः पटुदेश्यः पटुदेशीयः । पटुकल्पः ।

६३१ ॥ **मिङ्स्नेरक् प्राग्टेः** । ४ । १ । १७६ । मिङंतस्य स्निसंज्ञकस्य च टेः प्राग् अगित्ययं त्यो भवति ।

कापवादः । कुत्सितमज्ञातमल्पं वा पचति पचतकि । पचतकः । पचंतकि । सर्वकः । सर्वकौ । सर्वके । विश्वकः । विश्वकौ । विश्वके । असुकः । असुकौ । असुके । असुकाः । "वासुकः" इत्यकोऽकारस्य पक्षे उकारो निपात्यते । साकोऽपि किमः कादेश इति कः का किमित्यादि ।

६३२ ॥ **कियत्तदन्याद् द्वयोर्निर्धार्ये डतरः । ४ । १ । १९९ ।** किं यत् तत् अन्य इत्येतयेर्द्वयोर्निर्धार्येर्थे वर्तमानेभ्यः डतर इत्ययं त्यो भवति । समुदायादेकदेशस्य प्रकृष्य निष्कृस्य धारणं निर्धारणं । को भवतोः कठः कतरो भवतोः कठः पटुः कर्ता देवदत्तो वा । एवं--यतरः । ततरः । अन्यतरः । स आगच्छतु ॥

६३३ ॥ **वैकात् । ४ । १ । २०० ।** एकशब्दाद् द्वयोरेकस्मिन् निर्धार्ये वर्तमानात् डतरत्यो वा भवति । एको भवतोः कठः एकतरो भवतोः कठः । पटुः कर्ता वा । वावचनादगपि । एककः ॥

६३४ ॥ **बहूनां प्रश्ने डतमश्च । ४ । १ । २०१ ।** किमादेर्बहूनां मध्ये निर्धार्ये वर्तमानात् प्रश्नविषये डतमो भवति डतरश्च वा । बहुष्वासीनेषु कश्चित् कंचित् पृच्छति--को भवतां मध्ये कठः कतमः कतरो वा भवतां कठः । एवं-यतमः, यतरो वा । ततमः, ततरो वा । अन्यतमः अन्यतरो वा भवतां कठः स आगच्छतु ॥

६३५ ॥ **एकात् । ४ । १ । २०२ ।** एकशब्दात् बहूनामेकस्मिन्निर्धारणे वर्तमानात् डतमो भवति । एकतमो भवतां

कठ: । पटुर्गता वा । वावचनादगपि । एककः । महाधिकाराद्वाक्य-मपि एकः ॥

**६३६ ॥ प्रकारोक्तौ जातीयः । ४ । २ । १० ।** प्रकारोक्तौ वर्तमानात् मृदो जातीयस्त्यो भवति । पटुः प्रकारः पटुजातीयः । मृदुजातीयः । तज्जातीयः । यज्जातीयः । नानाभूतः प्रकारोऽस्य नानाजातीयः । एवंजातीयः । यथाजातीयः । तथाजातीयः ।

**६३७ ॥ स्येर्व्वारे कृत्वस् । ४ । २ । २१ ।** द्व्यर्थस्यायौगपद्येन वृत्तिस्तत्कालो वारस्तस्मिन्नर्थे वर्तमानात् स्यि-संज्ञकान्मृदः स्वार्थे कृत्वसित्ययं त्यो भवति । पंच वारान् भुंक्ते पंचकृत्वः । षट्कृत्वः । शतकृत्वः। सहस्रकृत्वः । बहुकृत्वः। यावत्कृत्वः।

**६३८ ॥ चतुस्त्रिद्वेः सुच् । ४ । ३ । २२ ।** चतुर् त्रि द्वि इत्येतेभ्यः स्यिसंज्ञकेभ्यो वारे वर्तमानेभ्यः सुच् इत्ययं त्यो भवति कृत्वसोऽपवादः । चतुरो वारान् भुंक्ते चतुर्भुंक्ते । त्रिर्भुंक्ते । द्विर्भुंक्ते । कृत्वसुसुजंतस्य झित्वात्सुपो झरित्युप् ॥

**६३९ ॥ भेषजादिभ्यष्ट्यण् । ४ । २ । २८।** भेषज इत्येवमादिभ्यः स्वार्थे ष्यण् त्यो वा भवति । भिषज्यतीति भेषजं । भिषजः कंड्वादियगंतत्वात् पचाद्यचि सत्यत्र च निपातना-दत एव एप् । भेषजमेव भैषज्यं । अनंतमेवानंत्यं । इतिहत्येव ऐ-तिह्यं । इतिहेति निसंघात उपदेशपरंपरायां वर्तते । चत्वार एव वर्णाः चातुर्वर्ण्यं । चातुराश्रम्यं । त्रैकाल्यं । शीलमेव शैलीयमा-चार्यस्य । कर्मणोऽणिति वर्तते ।

**६४० ॥ प्रज्ञादिभ्यः । ४ । २ । ५२ ।** प्रज्ञ इत्येवमादि-

भ्यः स्वार्थे अण् भवति । प्रजानातीति प्रज्ञः । प्रज्ञ एव प्राज्ञः । प्राज्ञी कन्या । प्रज्ञाश्रद्धार्चावृत्तेर्णः" इति मत्वर्थाण्णादस्य स्त्रियां विशेषः । णे त्ये-प्रज्ञा अस्या अस्तीति प्राज्ञा कन्या इति भवति । एवं वणिगेव वाणिजः । मन एव मानसं ।

६४१ ॥ **वर्णात् कारः** । ४ । २ । ५६ । वर्णवाचिनो मृदः कारस्त्यो भवति स्वार्थे । ल एव लकारः । ककारः । हकारः । बहुलमित्यनुवर्तमानात् क्वचिन्न भवति । अभिनिष्ठानो विसर्जनीय इति । क्वचिद्विभाषा-स्यात्कारः, स्याच्छब्दः । एवकारः, एवशब्दः । क्वचिदन्यदेव-रादिफः रेफः । रकारः इति साधुः ।

६४२ ॥ **देवादिभ्यस्त्रेबीभ्यः** । ४ । २ । ८२ । इवंतेभ्यः ईवंतेभ्यश्च देवादिभ्यः स्वार्थे त्रात्यो भवति । देवाँस्तुहि । देवत्रा स्तुहि । देवत्रा गच्छति । मनुष्यत्रा गच्छति । देवेषु वसति देवत्रा वसति । मनुष्यत्रा वसति ॥ इत्यादिसर्वो हृद्विधिमहोदधेराधिगंतव्यः ।

इति प्रक्रियावतारे हृद्विधिर्नाम चतुर्थः ॥

---

## अथ मिङधिकारः ।

अथ भवामीत्येवमादिकस्य सामान्याकारेण लोके प्रसिद्धेरनुत्पादविगमात्मकत्वान्नित्यतामवलंबमानस्यान्वाख्यानाय विशेषाकारेण करणसन्निपातोपनीतोत्पादविगमात्मकत्वादनित्यतामादधानस्योत्पत्तये च प्रकृत्यादिप्रक्रियावतारो व्यवहाररूपार्थकालकारकसंप्रतिपत्तये व्याख्येयः । तत्र प्रकृत्यधीनत्वादितरेषां प्रवृत्तेः प्रकृतिरेव तावद् व्याख्यायते । प्रथमं क्रियत इति प्रकृतिः । सा द्विधा, सकर्मकेतरभेदेन । त्रिधा-म-दो-भयवद्भेदेन । सप्तधा-विकरणभेदेन । दशधा-गणभेदेन । तत्र—भू सत्तायां । भू इत्येषा प्रकृतिः सत्तायामर्थे

वर्तते । इत्युक्तार्थत्वात् सत्ताशब्दस्य निवृत्तिः । लोके प्रयोगार्हत्वाद् असत्यामित्संज्ञायामूकारस्यावस्थानं ।

६४३ ॥ **भूवादयो धुः** । १ । २ । १ । भू इत्येवमादयो वा इत्येवंप्रकाराः पाठतोऽर्थतश्च परिच्छिन्नात्मनो धुसंज्ञका भवंति ॥ इति धुसंज्ञा । यद्यप्येवं क्रियावचनस्य धुत्वं सत्ता च द्रव्यधर्मः परिस्पंदरूपो न भवति । तथापि प्रसिद्धक्रियावाचिषु पचत्यादिष्विवात्रापि कालत्रयाभिव्यक्तिदर्शनं । वृक्षादिनामशब्देष्वनुपलभ्यमानं क्रियारूपं बुद्ध्युत्पत्तिनिमित्तं भवतीति धुवाच्या सती सत्ता क्रियाव्यपदेशमर्हतीत्यविरोधः । धोस्त्यः परः" इत्यनुवृत्तौ त्रिषु कालेषु त्रिषु साधनेषु च यथासंभवं तव्यादिषु प्राप्तेषु वक्तुर्विवक्षापूर्विका शब्दप्रवृत्तिः साध्यानुरूपसाधनोपादानस्य साध्यत्वात् लोकवदिति भवामीत्यादिकस्य निष्पादने ये एव योग्यास्त्यास्त एवोपादीयंते, वर्तमाने काले विवक्षिते लडित्यधिकृत्य—

६४४ ॥ **सति** । २ । २ । ११९ । सति वर्तमानकाले या क्रिया तद्वाचकाद् धोः परो लट् भवति । स च वर्तमानकालो द्विविधः । परमार्थरूपो व्यवहाररूपश्चेति । तत्र अणोरण्वंतरव्यतिक्रमणसमयविभागरूपः परमार्थरूपः । आरंभात् प्रभृत्या उपरमाद् व्यवहाररूपः । टकारः "टिद्वेटेरे:" इति विशेषणार्थः । अकारो "विदो लटो वा" इति विशेषणार्थः । कृत् कर्तरीत्यनुवर्तमाने—

६४५ ॥ **लः कर्मणि च भावे च धेः** । २ । ४ । ५७ । सकर्मकेभ्यो धुभ्यः कर्मणि कर्तरि च लकारा भवंति, धिसंज्ञकेभ्यो भावे च कर्तरि च लकारा भवंति । को धिः ?

६४६ ॥ **अकर्मको धिः** । १ । २ । २ । अविद्यमानकर्मकोऽविवक्षितकर्मको वा यो धुः स धिसंज्ञको भवति ।

तत्र विवक्षातः कर्तरि लकारस्तस्य कृत्त्वात् मृत्संज्ञायां स्वादिः प्राप्तः। वलादेरिडिति इट्, गागयोरित्यप् च। एवमेतेषु विधिषु प्राप्तेषु अनवकाशत्वात्।

६४७ ॥ **लो** । २ । ४ । ६४ । विशेषकाननुबंधानुत्सृज्य सामान्यस्य लकारमात्रस्य स्थाने वक्ष्यमाणा आदेशा भवंति। इत्यधिकृत्य-

६४८ ॥ **मिब्वस्मस्सिप्थस्थतिप्तस्झीड्वहिमहिथासाथांध्वंतातांझङ्** । २ । ४ । ६५ । मिप् वस् मस् सिप् थस् थ, तिप् तस् झि, इट् वहि महि, थास् आथां ध्वं, त आतां झङ् इत्येते आदेशा भवंति। इत्यनियमेन मिङां प्रसंगे नियमः क्रियते।

६४९ ॥ **ङेदितो दः** । १ । २ । ६ । ङकारेत एकारेतश्च धोः परस्य लकारस्य स्थाने द एव भवति।

६५० ॥ **ङौ** । १ । २ । ७ । भावे कर्मणि च द एव भवति। एवं प्रकृत्यर्थनियमे कृते मिङामनियमात् पुनरस्य विशेषेण प्राप्ताविदमुच्यते।

६५१ ॥ **मं** । १ । २।८९। यत्र मं च दश्च प्राप्नोति तत्र ममेव भवति। किं मं?

६५२ ॥ **लो मं** ॥ १ । २। १७७। लस्य स्थाने विधीयमाना आदेशा मसंज्ञका भवंति। लो मं, ङानं दः इति चानुवर्तमाने-

६५३ ॥ **मिङस्त्रिशोऽस्मद्युष्मदन्याः** । १। २। १७९। मसंज्ञकस्य दसंज्ञकस्य च मिङस्त्रीणि त्रीणि वचनानि यथासंख्यं अस्मद् युष्मद् अन्य इत्येवं संज्ञकानि भवंति। मिप् वस् मस् इत्य-

स्मद् । सिप् थस् थ इति युष्मद् । तिप् तस् झि इत्यन्यः । दस्य खल्वपि-इट् वहि महि इत्यस्मद् । थास् आथां ध्वं इति युष्मद् । त आतां झङ् इत्यन्यः ।

**६५४ ॥ एको द्विबहुश्चैकशः । १ । २ । १८३ ।** तेषां अस्मद्युष्मदन्यसंज्ञकानां त्रिकाणामेकैक एको द्विर्बहुरित्येवं संज्ञो भवति । मिबित्येकः । वसिति द्विः । मसिति बहुः । एवं शेषाणामपि योज्यं । तेषां संकरेण प्राप्तौ सत्यां नियमः क्रियते ।

**६५५ ॥ साधने स्वार्थे । १ । २ । १८० ।** तेऽस्मदादयः एकादयश्च स्वार्थे साधने भवंति । अस्मत्पदस्यार्थे साधने अस्मत्त्रिकं भवति । युष्मत्पदस्यार्थे साधनं युष्मत्त्रिकं भवति । आभ्यामन्यस्य पदस्यार्थे साधने अन्यत्त्रिकं भवति । तथा एकत्वविशिष्टेऽर्थे साधने एको मिप् भवति । एवमितरत्रापि योज्यं । पकारा इत्संज्ञा गे पीति विशेषणार्थाः । यत्ये तदादि गुरिति पूर्वस्य गुसंज्ञा ।

**६५६ ॥ मिङ्शिद् गः । २ । ४ । ९४ ।** धोर्विहितो यो मिङ् शिच्च स गसंज्ञो भवति । इति परस्य गसंज्ञा । गागयेरित्येप् प्राप्तः " नेटः " इति वर्तमाने—सम्बोऽथस्य मिङीति प्रतिषिद्धः । गे योगति वर्तमाने—

**६५७ ॥ कर्तरि शप् । २ । १ । ८१ ।** कर्तृवाचिनि गे परतो धोः परतः शबित्ययं त्यो भवति ।

**६५८ ॥ ईप्केत्यासन्नः प्राक्परयोः । १ । १ । ६९ ।** इबर्थो यत्र निर्दिश्यते तत्र पूर्वस्यासन्नस्य कार्यं भवति । कार्थो यत्र निर्दिश्यते तत्र परस्यासन्नस्य कार्यं भवति । इति पूर्वपरयोः स्थाने

निर्ज्ञाते-अनवकाशत्वादीपनिर्देशस्य पूर्वस्य स्थाने प्राप्ते त्यः पर एवेति नियमात् पूर्वपरयोर्मध्ये विकरणत्वात् भवति। शकारो मिङ् शिद्गः,, इति विशेषणार्थः। पकारो गेऽपीति विशेषणार्थः। तस्मिन् पूर्वस्य यणादेशः प्राप्तः। बाधित्वा तं उवादेशः प्राप्तः। तमपि बाधित्वा परत्वादेप् प्राप्तः। येन नाप्राप्तिस्तद्बाधनमिति यणमेव पुनरप्यनङ्गादौ सावकाशमेपं बाधित्वा उवादेश एव प्राप्तः। मध्येऽपवादाः पूर्वान् विधीन् बाधंते नोत्तरानिति यणमेवोवादेशो बाधते न पुनरेपं। अतः मिदेरेबिति वर्तमाने-गागयेरित्येप् एकः स्थाने भवति। स्वासन्न इत्युकारस्यौकारः। अवादेशः। गोरिति "सूभ्वोऽधस्य मिङि" इति च प्रस्तुत्य—

६५९ ॥ यञ्यतो दीः। ५। २। १०५। यञादौ मिङि परतो गोरकारांतस्य दीर्भवति। गोरिति वर्तमाने—

६६० ॥ झोऽन्तः। ५। १। ३। झ इत्येतस्य गोर्निमित्तभूतस्य त्यावयवस्य अंत इत्ययमादेशो भवति। स चानजंतादेशः। नकारस्यानुस्वारपरस्वत्वे "एप्यतः"इति अकारस्य परस्वत्वं। सुम्मिङंतं पदमिति मिङंतस्य पदसंज्ञायां पूर्ववद् रित्वविसर्जनीयौ। भवामि। भवावः। भवामः। भवसि। भवथः। भवथ। भवति। भवतः। भवंति। यथैव ह्येकादिशब्दप्रयोगे सत्यसति चैकादयो भवंति। तथा अस्मदादिशब्दप्रयोगे सत्यसति चास्मदादयः। तेन-केवलोऽपि प्रयोगस्तैस्सह च भवति। यथा-अहं भवामि। आवां भवावः। वयं भवामः। त्वं भवसि। युवां भवथः। यूयं भवथ। स भवति। तौ भवतः। ते भवंति। यत्र चास्मदादिपदं प्रयोक्तुं शक्यते तत्रास्मदादयो नान्यत्र। यथा-भवान् भवति। भवंतौ भवतः। भवंतो भ-

वंति । अत्र हि युष्मच्छब्दपर्यायस्य भवच्छब्दस्य प्रयोगे युष्मच्छब्दस्य प्रयोक्तुमशक्यत्वात् सिप्थसथा न भवंति ।

६६१ ॥ **पूर्वः सहोक्तौ । १ । २ । १८१ ।** युगपद्वचनेऽस्मदादीनां पदापेक्षया यः पूर्वः स भवति । स च त्वं च भवथः । त्वं चाहं च भवावः । स च त्वं च अहं च भवामः । एवं नित्यं मे प्राप्तेऽर्थविशेषणो दो विधीयते । तत्रार्थविशेषाभिव्यक्तये "गेर्द्वोर्यत् कार्यं तदंतरंगमिति धुर्गिना युज्यते पश्चात् साधनवाचिना त्येनेति कर्मव्यतिहाराभिव्यक्त्यर्थमतिरित्ययं गिर्धोः प्राक् प्रयुज्यते । अतिविशिष्टां क्रियां विर्विशिनष्टि इति विरत्ययं च गिः । ताभ्यां सुपः । झरित्युप् । यणादेशः । व्यतिभू इत्यतः पूर्ववल्लट् । तस्य "ङेदितो दः" इत्यधिकृत्य—

६६२ ॥ **कर्तरि ञे । १ । २ । ८ ।** ञार्थे वर्तमानात् धोः परस्य कर्तरि विहितस्य लस्य स्थाने दो भवति । कः पुनः ञार्थः ।

६६३ ॥ **कर्मव्यतिहारे ञः । २ । ३ । ८९ ।** कर्मव्यतिहारेऽर्थे ञस्त्यो भवति । इति विहितः । तत्र शब्दे कार्यस्यासंभवात् अर्थे कार्यं विज्ञास्यते । इति ञार्थः कर्मव्यतिहारः कृतस्य प्रतिकरणं ग्रहस्य प्रतिग्रहणं हरणस्य प्रतिहरणमित्यर्थः । को दः ?

६६४ ॥ **इङानं दः । १ । २ । १७८ ।** इङिति प्रत्याहारः आन इति स्वरूपग्रहणं । तौ दसंज्ञौ भवतः । इति । इट् वहि महि, थास् आथां ध्वं, त आतां झङ्, इत्येते आदेशा भवंति पूर्ववदस्मदाद्येकत्वादिनियमः । टकारः "रन्नज्झेटः" इति विशेषणार्थः । ङकारः प्रत्याहारार्थः ।

६६५ ॥ **टिद्दटेरेः । २ । ४ । ६६ ।** टितो लकारस्य

स्थाने विहितस्य दस्य टेरेकारो भवति । यत्र एक एवाच् तत्र व्यपदेशिवद्भाविनांत्यादित्वे सति टित्वं ।

६६६ ॥ **थासः सेः । २ । ४ । ६७ ।** टितो लकारस्य स्थाने विधीयमानस्य थासः से इत्ययमादेशो भवति । शबेबवादेशाः । यञ्यतो दीरिति दीत्वं । अतो येयित्यधिकृत्य-

६६७ ॥ **आतोऽपः । ५ । १ । १५६ ।** गोरकारांतादुत्तरस्य पिद्वर्जितस्य आकारस्य इयादेशो भवति । इत्याथे आते इत्यनयोराकारस्य इयादेशः ।

६६८ ॥ **व्योः खं वल्कौ । ४ । ३ । ६३ ।** वकारयकारयोः खं भवति त्यावयवे त्यकार्ये च वलि कौ च परतः । इति यकारस्य खं । आदेबित्येप् । झोऽत इत्यंतादेशः । इटि च एप्यत इति पररूपं । व्यतिभवे । व्यतिभवावहे । व्यतिभवामहे । व्यतिभवसे । व्यतिभवेथे । व्यतिभवध्वे । व्यतिभवते । व्यतिभवेते । व्यतिभवंते । एधै वृद्धौ । ऐकारोऽप्रयोगी दार्थः । ततः "सति" इति लट् पूर्ववन्नीतिः । एधे, एधावहे, एधामहे । एधसे, एधेथे, एधध्वे । एधते, एधेते, एधंते । डुपचाञ् पाके । डुशब्दपकाराकारञकारा इतः । ततो लडादयः । पचामि । पचावः । पचामः । पचसि । पचथः । पचथ । पचति । पचतः । पचंति । कर्त्रोप्यफलविवक्षायां-

६६९ ॥ **ञितः फलेशे । १ । २ । ८१ ।** ञकारेतो धोः परस्य फले कर्तरि वर्तमानस्य लस्य दो भवति । शेषं पूर्ववत् । पचे । पचावहे । पचामहे । पचसे । पचेथे । पचध्वे । पचते । पचेते । पचंते । तेभ्य एव धुभ्यः " त्यः,, व्यऽभौ भ्वो भूते " इति वर्तमाने—

**६७० ॥ अनद्यतने लङ् । २ । २ । १०९ ।** आन्याय्यादुत्थानादान्याय्यात् संवेशनादेषोऽद्यतनः कालः । अहरुभयतोऽर्द्धरात्रं वा । न विद्यतेऽद्यतनोऽस्मिन् स तथा । तस्मिन् भूते वर्तमानात् धोर्लङ् भवति । ङकारो "ङितः सखं" इति विशेषणार्थः । लकारो लुङ्लङ्लृङिति विशेषणार्थः । लस्य पूर्ववन्मविधिः ।

**६७१ ॥ मिप्थस्थतसोंऽतंतताम् । २ । ४ । ८४ ।** ङितो लकारस्य स्थाने विहितानां मिप् थस् थ तस् इत्येतेषां यथासंख्यं अम् तम् त ताम् इत्येते आदेशा भवंति ।

**६७२ ॥ ङितः सखं । २ । ४ । ८२ ।** अस्मदूसंज्ञकस्य ङितः सकारस्य खं भवति । इत्यंत्यसकारस्य खं ।

**६७३ ॥ एर्म्मे । २ । ४ । ८३ ।** ङितो लकारस्य सिप्तिबझीनामिकारस्य खं भवति । पूर्ववच्छबेबवादेशाः । यञ्यतोदीरिति दीत्वं ।

**६७४ ॥ लुङ्लङ्लृङ्क्ष्यमाङ्नाट् । ४ । ४ । ७४ ।** लुङ्लङ्लृङ्विषये गोरडागमो भवति न चेन्माङ् प्रयुज्यते । टकारष्टिदादिरिति विशेषणार्थः । अभवं । अभवाव । अभवाम । अभवः । अभवतं । अभवत । अभवत् । अभवतां । अभवन् । स्फांतस्य खमिति तकारस्य खं । ङितो लस्यादेशेषु टित्त्वाभावात् "टिद्टेरे"रित्यादि नास्ति । पूर्ववदन्यत् नीतिः । व्यत्यभवे । व्यत्यभवावहि । व्यत्यभवामहि । व्यत्यभवथाः । व्यत्यभवेथां । व्यत्यभवध्वं । व्यत्यभवत । व्यत्यभवेतां । व्यत्यभवंत ॥ अचीति वर्तमाने—

**६७५ ॥ अटश्च धौ । ४ । ३ । ९० ।** अट ऐबेव भवत्यजादौ धौ परतः । इत्यप् । ऐधे । ऐधावहि । ऐधामहि । ऐधथाः

ऐधेथां । ऐधध्वं । ऐधत । ऐधेतां । ऐधंत ॥ अपचं । अपचाव । अपचाम । अपचः । अपचतं । अपचत । अपचत् । अपचतां । अपचन् । अपचे । अपचावहि । अपचामहि । अपचथाः । अपचेथां । अपचध्वं । अपचत । अपचेतां । अपचंत । तेभ्य एव धुभ्यः—

**६७६ ॥ विधिनिमंत्रणामंत्रणाधीष्टसंप्रश्नप्रार्थने लिङ् २ । ३ । १५२ ।** विधिर्नियोगः । अज्ञातज्ञापनमित्येके । निमंत्रणं नियोगतः कर्तव्यं । क्रियास्वाभिमुख्यकरणमित्येके । आमंत्रणं यत्कामचारतः कर्तव्यं । कर्तव्येष्वनुज्ञापनमित्येके । अधीष्टः सत्कारपूर्विका व्यापारणा । संप्रश्नः संप्रसारणा बुभुत्सावेदनं । प्रार्थना याच्ञा । एतेषु त्यार्थविशेषणेषु धोर्लिङ् भवति । ङकारो ङितः सखमिति विशेषणार्थः । इकारः "लेः सीयुट्" इति विशेषणार्थः । पूर्ववल्लस्य मिबादयः । ङितः सखमित्यादिकार्यं शबेबवादेशाश्च । लेः सीयुडिति प्राप्ते—

**६७७ ॥ ङ्यासुण्मे । २ । ४ । ८६ ।** मविषये लिङादेशानां ङ्यासुडागमो भवति । टकारो देशविध्यर्थः । उकार उच्चारणार्थः । ङकारो ङित्कार्यार्थः ।

**६७८ झेर्जुस् । २ । ४ । ९० ।** लिङादेशस्य झेर्जुसादेशो भवति ॥ जकारो जुसीति विशेषणार्थः । "रुद्भ्यो गे" इत्यधिकृत्य—

**६७९ ॥ लिङोऽनंत्यसखं । ५ । १ । १५३ ।** गविषये लिङोनंत्यस्य सकारस्य खं भवति । इति ङ्यासुटः सखं ।

**६८० ॥ अतो येय् । ५ । १ । १५४ ।** गोरकारांतात् परस्य या इत्येतस्य इयादेशो भवति । वलादौ "व्योः ख वल्के",,

इति यत्वं, आदेष्‌ । पूर्ववन्नीतिः । भवेयं । भवेव । भवेम । भवेः । भवेतं । भवेत । भवेत्‌ । भवेतां । भवेयुः ॥ दविधौ–

६८१ ॥ **लेः सीयुट्‌** । २ । ४ । ८५ । लिङादेशानां सीयुडागमो भवति । पूर्ववदितो निवृत्तिः ।

६८२ ॥ **रन्नज्झेटः** । २ । ४ । ८८ । लिङादेशयोः झ इट्‌ इत्येतयोः यथासंख्यं रन्‌ अत्‌ इत्येतावादेशौ भवतः । तकारस्तपरार्थः । शबबत्वादेशश्च । वलादौ सीयुटो यत्वमेष्‌ च । व्यतिभवेय । व्यतिभवेवहि । व्यतिभवेमहि । व्यतिभवेथाः । व्यतिभवेयाथां । व्यतिभवेध्वं । व्यतिभवेत । व्यतिभवेयातां । व्यतिभवेरन्‌ ॥ एधेय । एधेवहि । एधेमहि । एधेथाः । एधेयाथां । एधेध्वं । एधेत । एधेयातां, एधेरन्‌ । पचेयं । पचेव । पचेम । पचेः । पचेतं । पचेत । पचेत्‌ । पचेतां । पचेयुः । पचेय । पचेवहि । पचेमहि । पचेथाः । पचेयाथां पचेध्वं । पचेत । पचेयातां । पचेरन्‌ । तेभ्य एव धुभ्यो विधिनिमंत्रणेत्यादीनधिकृत्य–

६८३ ॥ **लोट्‌** । २ । ३ । १५३ । त्यार्थविशेषणेषु विध्यादिषु धोर्लोट्‌ भवति । टकारष्टित्कार्यार्थः । ओकारो लोटो लङ्वदिति विशेषणार्थः । तस्य मिबादयः । लोटो लङ्वदित्यतिदेशा ङितः सत्वमित्यादिकार्यं । एमें''इति त्व प्राप्ते–अनवकाशत्वात्‌–

६८४ ॥ **एरुः** । २ । ४ । ७२ । लोडादेशस्य इकारस्य उकारादेशो भवति । मेर्निरिति निरादेशः ।

६८५ ॥ **सेर्हिङित्‌** । २ । ४ । ७६ । लोडादेशस्य सेर्हिरादेशो भवति स च ङिद्वत्‌ भवति ।

६८६ ॥ **टाबस्मदः** । २ । ४ । ८० । लोडादेशस्या-

स्मदः टाबागमो भवति । टपावितौ पूर्ववद् प्रयोजयतः । शबेबवादेशाः । स्वेको दीः । ञरुबिति वर्तमाने—

६८७ ॥ **अतो हेः । ४ । ४ । १०३ ।** गोरकारांतात् परस्य हेरुब्भवति । भवानि । भवाव । भवाम । भव । भवतं । भवत । भवतु । भवतां । भवंतु । दविधौ—टिइटेरेरित्येत्वं । थासः सेभावः ।

६८८ ॥ **आमेतः । २ । ४ । ७८ ।** लोडादेशस्य एकारस्य आमादेशो भवति ।

६८९ ॥ **स्वो वाऽम् । २ । ४ । ७९ ।** लोटः सकारबकाराभ्यां परस्य एकारस्य यथासंख्यं व अम् इत्येतावादेशौ भवतः । अस्मदष्टाप् ।

६९० ॥ **एत ऐ । २ । ४ । ८१ ।** लोडादेशस्यास्मद एकारस्य ऐकारादेशो भवति । व्यतिभवै । व्यतिभवावहै । व्यतिभवामहै । व्यतिभवस्व । व्यतिभवेथां । व्यतिभवध्वं । व्यतिभवतां । व्यतिभवेतां । व्यतिभवंतां । एधै । एधावहै । एधामहै । एधस्व । एधेथां । एधध्वं । एधतां । एधेतां । एधंतां । पचानि । पचाव । पचाम । पच । पचतं । पचत । पचतु । पचतां । पचंतु । पचै । पचावहै । पचामहै । पचस्व । पचेथां । पचध्वं । पचतां । पचेतां । पचंतां । आशीरर्थविवक्षायां—

६९१ ॥ **लोट् चाशिषि । २ । ३ । १६४ ।** धोः परो लोड् भवति चाशिषि गम्यमानायां । किमाशीः ? भावीष्टार्थशंसनमाशीः । अत एव वर्त्स्यत्कालसामान्ये विधिः । पूर्ववच्छेषं ।

६९२ ॥ **तुह्योर्ङ्तातङ् वा । २ । ४ । ९९ ।** तु हि इत्येतयोः लोडादेशयोराशिर्विषययोः ङ्तादित्ययमादेशो भवति । ङकारः

ङित्कार्यार्थः । भवानि । भवाव । भवाम । भवतात् त्वं । भव त्वं । भवतं । भवत । भवतात् भवान् । भवतु भवान् । भवतां । भवंतु । एवं-पचतात् त्वं । पच त्वं । पचतात् भवान् । पचतु भवान् ॥ टुनदि समृद्धौ । इकारटुशब्दावितौ । इदितोनुम् । मकारो देशविध्यर्थः । उकार उच्चारणार्थः । ततः पूर्ववल्लुडादयः । नंदामि । नंदावः । नंदामः । इत्यादयः ॥ ध्वंसुङ् गतौ । ङकारोकारावितौ । नश्चापदांते झलीत्यनुस्वारः । ङित्त्वाद् "ङेदितो दः" इति दो भवति । ध्वंसे । ध्वंसावहे । ध्वंसामहे । इत्यादि ॥ व्येञ् संवरणे । व्ययामि । व्ययावः । व्ययामः । इत्यादि । ञित्त्वात् "ञितः फलेशे" इति दः । व्यये । व्ययावहे । व्ययामहे ॥ लङि—अनंदं । अनंदाव । अनंदाम । इत्यादि । अध्वंसे । अध्वंसावहि । अध्वंसामहि ॥ इत्यादि ॥ अव्ययं' अव्ययाव । अव्ययाम इत्यादि । अव्यये । अव्ययावहि । अव्ययामहि ॥ लिङि—नंदयं। नंदेव । नंदेम । इत्यादि ॥ ध्वंसेय । ध्वंसेवहि । ध्वंसेमहि ॥ इत्यादि । व्ययेयं । व्ययेव । व्ययेम । इत्यादि । व्ययेय । व्ययेवहि । व्ययेमहि । इत्यादि ॥ लोटि—नंदानि । नंदाव नंदाम । इत्यादि । ध्वंसै । ध्वंसावहै । ध्वंसामैह । इत्यादि । व्ययानि । व्ययाव । व्ययाम । इत्यादि । व्ययै । व्ययावहै । व्ययामहै इत्यादि ॥ इति भ्वादिः ।

हु दानादनयोः । पूर्ववल्लुडादयः । मध्ये कर्तरि शप् । तस्य—

**६९३ ॥ हुदादेरुजुप् । २ । १ । ८२ ।** ह्वादेरदादेश्च परस्य शपो यथासंख्यं उच् उप् इत्येतावादेशौ भवतः । इत्युच् । पित्सु ङित्वात् परत्वेन गागयोरित्येप् । वसादावपि "गेऽपि" इति ङित्वादेप् न भवति । पश्चात्—

**६९४ ॥ लिडुच्कचि घोः । ४ । ३ । १२ ।** लिटि उ-

चि कचि च परतो धोरादेरेकाचो द्वे रूपे भवतः । इति द्वित्वं-

६९५ ॥ **पूर्वश्चः** । ४ । ३ । ११ । तयोर्द्विरुक्तयोर्यः पूर्वः स चसंज्ञो भवति । चस्येत्यधिकृत्य-

६९६ ॥ **प्रः** ५ । २ । १८२ । चस्य प्रादेशो भवति । इति चस्य प्रः ।

६९७ ॥ **कुहोश्चुः** ५ । २ । १८७ । चसंबंधिनः कवर्गस्य हकारस्य च चवर्गो भवति । इति हकारस्यासन्नो झकारः । झषो जश्,, इति जकारः । "थः" इति थसंज्ञायां—

६९८ ॥ **थादत्** ५ । १ । ४ । झस्यादादेशोभवत्यंतापवादः । "होर्गे वः" । इत्युवादेशापवादो वकारः । जुहोमि । जुहुवः । जुहुमः । जुहोषि । जुहुथः । जुहुथ । जुहोति । जुहुतः । जुह्वति । व्यतिजुह्वे । व्यतिजुहुवहे । व्यतिजुहुमहे । व्यतिजुहुषे । व्यतिजुह्वाथे । व्यतिजुहुध्वे । व्यतिजुहुते । व्यतिजुह्वाते । व्यतिजुह्वते ॥ ओहाङ् गतौ ॥ ततो लडादयः "चस्य,, उचीति च वर्तमाने–शबुचाद्वित्वादिः ।

६९९ ॥ **भृञ्हाङ्माभिः** । ५ । २ । १९८ । भृञ् हाङ् माङ् इत्येतेषामुचि चस्येकारादेशो भवति । "गेऽतः क्ङिति" वर्तमाने—

७०० ॥ **थश्नोरातः** । ४ । ४ । १०९ । थसंज्ञकस्य श्ना इत्येतस्य-चाकारस्य खं भवति क्ङिति गे परतः । उत्तरत्र हलीति वचनात् इहाचि संप्रत्ययः । अभोरित्युत्तरत्र वर्जनात् हल्यपि भुसंज्ञकानां खं ।

७०१ ॥ **हल्यभोरीः** । ४ । ४ । ११० । भुसंज्ञकवर्जितस्य थस्य श्ना इत्येतस्य चाकारस्य ईकारादेशो भवति हलादौ क्ङिति परतः, जिहे, जिहीवहे ' जिहीमहे ' जिहीषे , जिहीथे '

जिहीध्वे । जिहीते । जिहाते । जिहते ॥ डुधाञ् धारणे च । डुञा-विती । अतो लडादयः । शप उचि द्वित्वादिः । झषो जशिति जश्त्वं, थश्नोरात इत्यात्वं । एकाचो बशो भष् झषःस्ध्वोरित्यधिकृत्य—

७०२ ॥ धः । ८ । २ । ७४ । झषंतस्य दधातेर्बशो भष् भवति झलि परतः । इति दस्य भष्भावः । दधामि । दध्वः । दध्मः । दधासि । धत्थः । धत्थ । दधाति । धत्तः । दधति । दधे । दध्वहे । दध्महे । धत्से । दधाथे । धध्ध्वे । धत्ते । दधाते । दधते ॥ लङि-झेर्जुसित्यधिकृत्य—

७०३ ॥ **थवित्सेः । २ । ४ । ९१** । थसंज्ञकाद् विदः सेश्च परस्य झेर्जुसादेशो भवति ।

७०४ ॥ **जुसि । ५ । २ । ९०** । जुसि परतः इगंतस्य गोरेभवति । इत्येप् । अजुहवं । अजुहुव । अजुहुम । अजुहोः । अजुहुतं । अजुहुत । अजुहोत् । अजुहुतां । अजुहवुः । व्यत्यजुह्वि । व्यत्यजुहुवहि । व्यत्यजुहुमहि । व्यत्यजुहुथाः । व्यत्यजुह्वाथां । व्य-त्यजुहुध्वं । व्यत्यजुहुत । व्यत्यजुह्वातां व्यत्यजुह्वत ॥ अजिहि । अजिहीवहि । अजिहीमहि । अजिहीथाः । अजिहाथां । अजि-हीध्वं । अजिहीत । अजिहातां । अजिहत ॥ अदधं । अदध्व । अदध्म । अदधाः । अधत्तं । अधत्त । अदधात् । अधत्तां । अदधुः । अदधि । अदध्वहि । अदध्महि । अधत्थाः । अदधाथां । अधद्ध्वं । अधत्त । अदधातां । अदधत ॥ लिङि—जुहुयां । जुहुयाव । जुहुयाम । जुहुयाः । जुहुयातं । जुहुयात । जुहुयात् । जुहुयातां । जुहुयुः । उस्यपदे" इत्याकारस्य पररूपत्वं । व्यतिजुह्वीय । व्यतिजुह्वीवहि । व्यतिजुह्वीमहि । व्यतिजु-ह्वीथाः । व्यतिजुह्वीयाथां । व्यतिजुह्वीध्वं । व्यतिजुह्वीत व्यतिजुह्वीयातां ।

व्यतिजुह्वीरन् ॥ जिहीय । जिहीवहि । जिहीमहि । जिहीथाः । जिहीयाथां । जिहीध्वं । जिहीत । जिहीयातां । जिहीरन् ॥ विपूर्वडुधाञ् । विदध्यां । विदध्याव । विदध्याम । विदध्याः । विदध्यातं । विदध्यात । विदध्यात् । विदध्यातां । विदध्युः । विदधीय । विदधीवहि । विदधीमहि । विदधीथाः । विदधीयाथां । विदधध्विं । विदधीत । विदधीयातां । विदधीरन् ॥ लोटि—

**७०५ ॥ झल्हो र्हेर्धिः । ४ । ४ । १०१ ।** झलंतात् हु इत्येतस्माच्च गोः परस्य हेर्धिरादेशो भवति । जुहवानि । जुहवाव । जुहवाम । जुहुधि । जुहुतं । जुहुत । जुहोतु । जुहुतां । जुह्वतु । आशिषि-जुहुधि जुहुतात् वा । जुहोतु । जुहुतात् वा । व्यतिजुहवै । व्यतिजुहवावहि । व्यतिजुहवामहि । व्यतिजुहुष्व । व्यतिजुह्वाथां । व्यतिजुहुध्वं । व्यतिजुहुतां । व्यतिजुह्वातां । व्यतिजुह्वतां जिहै । जिहावहि । जिहामहि । जिहीष्व । जिहाथां । जिहीध्वं । जिहीतां । जिहातां । जिहतां ।

**७०६ ॥ भ्वसो ह्येच्चखे । ४ । ४ । ११६ ।** भुसंज्ञकस्यास्तेश्च घोर्हकारादौ हौ परतः एत्वं भवति चस्य च खं । दधानि दधाव । दधाम । धेहि । धत्ताद् वा । धत्तं । धत्त । दधातु । धत्तात् । वा । धत्तां । दधतु । दधै । दधावहै । दधामहै । धत्स्व । दधाथां । धद्ध्वं । धत्तां । दधातां । दधतां । इति ह्वादिः ।

अदो भक्षणे । ओकारोऽनिडर्थः । पूर्ववल्लडादिषु कृतेषु मध्ये कर्तरि शप् । तस्य ह्वदादेरुजुवित्युप्—

**७०७ ॥ चर्खरि । ४ । ४ । १५५ ।** झलां चर् भवति खरि परे । इति चर्त्वे । अद्मि । अद्वः । अद्मः । अत्सि । अत्थः । अत्थ । अत्ति । अत्तः । अदंति । झोऽन्तः । "थादत्" इति प्रस्तुत्य—

**७०८ ॥ देऽनतः । ५ । १ । ५ ।** दाविषयस्यानकारांताद्धोः

परस्य झस्य अदित्ययमादेशो भवति। व्यत्यदे। व्यत्यद्वहे। व्यत्यद्महे। व्यत्यत्से। व्यत्यदाथे। व्यत्यद्ध्वे। व्यत्यत्ते। व्यत्यदाते। व्यत्यदते॥ शीङ् स्वप्ने। ङकारो दार्थः। पूर्ववल्लडादिः।

७०९॥ **शीङो गे**। ५। २। १४४। शीङः एप् भवति गे परतः। इत्यकारः।

७१०॥ **शीङो रत्**। ५। १। ६। शीङः परस्य झस्य रदादेशो भवति। शये। शेवहे। शेमहे। शेषे। शयाथे। शेध्वे। शेते। शयाते। शेरते॥ ब्रूञ् व्यक्तायां वाचि। ञकारो कारावितौ। पूर्ववल्लडादिषु—थस्य गे पित्यर्चात्यधिकृत्य—

७११॥ **ब्रुव ईट्**। ५। २। १०१। ब्रू इत्येतस्माद् परस्य हलादेः पितो गस्येडागमो भवति। ब्रवीमि। ब्रूवः। ब्रूमः। ब्रवीषि। ब्रूथः। ब्रूथ॥ ब्रवीति। ब्रूतः। ब्रुवन्ति। ब्रुवे। ब्रूवहे। ब्रूमहे। ब्रूषे। ब्रुवाथे। ब्रूध्वे। ब्रूते। ब्रुवाते। ब्रुवते।

७१२॥ **ब्रुव आहश्च**। २। ४। ७२। ब्रुवः परस्य लटो मानां णशादयो भवंति वा तत्संनिधाने च ब्रुव आहश्चादेशः। अकार उच्चारणार्थः।

७१३॥ **न थास्मदः**। २। ४। ७३। ब्रुवः परस्य लटो मानां थस्यास्मदश्च ये प्राप्ता आदेशास्ते न भवंति। तत्संनियोगशिष्ट आहादेशश्च। सिपस्थे कृते—झलो झलीति वर्तमाने—

७१४॥ **आहस्थः**। ५। ३। ७०। ब्रू आदेशस्याहः थकारादेशो भवति झलि परतः। पुनश्चर्त्वं। ब्रवीमि। ब्रूवः। ब्रूमः। आत्थ। आहथुः। ब्रूथ। आह। आहतुः। आहुः। लङि—

७१९ ॥ रुद्भ्योऽट् चादोट् । ५ । २ । १०४ ।

रुदादिभ्यो जक्षपर्यंतेभ्यः केवले हालि पिति गे परतः अडागमो भवति ईट् च । अदेः पुनरडेव भवति । इत्यदेरट् । टकारो देश विध्यर्थः । लुङ्लङ्लृङ्क्ष्व इत्यट् । अटश्चेत्यैप् । आदं, आद्व । आद्म । आदः । आत्तं । आत्त । आदत् । आत्तां । आदन् ॥ व्यत्यादि । व्यत्याद्वहि । व्यत्याद्महि । व्यत्यात्थाः । व्यत्यादाथां । व्यत्याद्ध्वं । व्यत्यात्त । व्यत्यादातां । व्यत्यादत । अशयि । अशेवहि । अशेमहि । अशेथाः । अशयाथां । अशेध्वं । अशेत । अशयातां । अशेरत ॥ अब्रुवं । अब्रूव । अब्रूम । अब्रवीः । अब्रूतं । अब्रूत । अब्रवीत् । अब्रूतां । अब्रुवन् ॥ अब्रवि । अब्रूवहि । अब्रूमहि । अब्रूथाः 'अब्रुवाथां । अब्रूध्वं । अब्रूत । अब्रुवातां अब्रुवत । लिङि–अद्यां । अद्याव । अद्याम । अद्याः । अद्यातं । अद्यात । अद्यात् । अद्यातां । अद्युः । उस्यपद इति पररूपं । व्यत्यदीय । व्यत्यदीवहि । व्यत्यदीमहि । व्यत्यदीथाः । व्यत्यदीयाथां । व्यत्यदीध्वं । व्यत्यदीत । व्यत्यदीयातां । व्यत्यदीरन् । शयीय । शयीवहि शयीमहि । शयीथाः । शयीयाथां । शयीध्वं । शयीत । शयीयातां । शयीरन् । ब्रूयां । ब्रूयाव । ब्रूयाम । ब्रूयाः । ब्रूयातं । ब्रूयात । ब्रूयात् । ब्रूयातां । ब्रूयुः । ब्रुवीय । ब्रुवीवहि । ब्रुवीमहि । ब्रुवीथाः । ब्रुवीयाथां । ब्रुवीध्वं । ब्रुवीत ब्रुवीयातां । ब्रुवीरन् ॥ लोटि – सेर्हिभावे धिभावे च-अदानि । अदाव । अदाम, अद्धि । अत्तात् वा । अत्तं । अत्त । अत्तु । अत्तात् वा । अत्तां अदंतु । व्यत्यदै । व्यत्यदावहै । व्यत्यदामहै । व्यत्यत्स्व । व्यत्यदाथां व्यत्यद्ध्वं । व्यत्यत्तां । व्यत्यदातां । व्यत्यदत्तां । शयै । शयावहै । शयामहै । शेष्व । शयाथां । शेध्वं । शेतां । शयातां । शेरतां । से-

र्हित्वं ङित्वं च। ब्रुवाणि। ब्रुवाव। ब्रुवाम। ब्रूहि ब्रूतात्। ब्रूतं ब्रूत। ब्रवीतु। ब्रूतात् वा। ब्रूतां। ब्रुवंतु। ब्रवै। ब्रवावहै। ब्रवामहै। ब्रूष्व। ब्रुवाथां ब्रूध्वं। ब्रूतां ब्रुवातां। ब्रुवतां॥ इत्यदादिः॥

दिवु क्रीडाजयेच्छापणिद्युतिगतिषु। उकारो वेडर्थः। पूर्ववल्लुडादयः। दिवादेः श्यः। इति मध्ये श्यः। शपोऽपवादः। शकारः शित्कार्यार्थः। तेन "घ्युङः" इत्येष न भवति "हल्यभकुर्च्छुरः" इति दीर्त्वं। दीव्यामि। दीव्यावः। दीव्यामः इत्यादि। व्यतिदीव्ये। व्यतिदीव्यावहे। व्यतिदीव्यामहे। इत्यादि। ऊषूङो प्राणिप्रसवे। ऊकारौकारङकारा इतः। ध्वादेः ष्णोऽष्ठ्याष्ठिवष्वस्कः स्वमिति षकारस्य सकारः। सूये। सूयावहे। सूयामहे। इत्यादि। णहौञ् बंधने। औकारञकारावितौ। ध्वादेः ष्ण इत्यादिना णकारस्य नकारः। नह्यामि। नह्यावः। नह्यामः। इत्यादि। नह्ये। नह्यावहे। नह्यामहे इत्यादि। लङि—प्राग् धोः सम्प्रयोगः। समदीव्यं। समदीव्याव। समदीव्याम। इत्यादि। व्यत्यदीव्ये। व्यत्यदीव्यावहि। व्यत्यदीव्यामहि। इत्यादि। प्रपूर्वो दीर्त्वं। प्रासूये। प्रासूयावहि। प्रासूयामहि। इत्यादि। समनह्यं। समनह्याव। समनह्याम। इत्यादि। समनह्ये। समनह्यावहि। समनह्यामहि इत्यादि। लिङि-दीव्येयं। दीव्येव। दीव्येम। इत्यादि। व्यतिदीव्येय। व्यतिदीव्येवहि। व्यतिदीव्येमहि। इत्यादि। प्रसूयेय। प्रसूयेवहि। प्रसूयेमहि। इत्यादि. संनह्येयं। संनह्येव। सनह्येम। इत्यादि। सन्नह्येय। सन्नह्येवहि। सन्नह्येमहि। इत्यादि। लोटि-परिपूर्वः। परिदीव्यानि। परिदीव्याव परिदीव्याम। इत्यादि। व्यतिदीव्यै। व्यतिदीव्यावहै। व्यतिदीदीव्यामहै। इत्यादि। प्रसूयै। प्रसूयावहै। प्रसूयामहै। इत्यादि

७१६॥ **ग्यंतरोऽदुरो विकृतेः। ५। ४। ११६।**

दुर्वर्जिताद् गेरंत:शब्दाच्च परस्य विकृतेर्नकारस्य णकारो भवति । इति णत्वं । परिणह्यानि । परिणह्याव । परिणह्याम । इत्यादि । परिणह्यै । परिणह्यावहै । परिणह्यामहै । इत्यादि । इति दिवादिः ॥

षूञ् अभिषवे । मंथनं पीडिनं वाऽभिषवः । ञकार इत् । ध्वादेः ष्ण इत्यादिना सकारः । पूर्ववल्लडादयः ।

**७१७ ॥ स्वादेः श्नुः । २ । १ । ८७ ।** स्वादिभ्यो धुभ्यः कर्तरि गे परतः श्नुर्विकरणो मध्ये भवति । शकारः शित्कार्यार्थः । तेन–गे पीति ङिद्वद्भावादेप् न भवति । उतोऽस्फादिति वर्तमाने–

**७१८ ॥ वा म्वोः खं । ४ । ४ । १०५ ।** अस्फात्परो य उकारस्तदंतस्य गोर्निमित्तभूतस्य खं वा भवति वकारादौ मकारादौ च परतः । इति पक्षे-उतः खं । एवं वहिमह्योरपि । सुनोमि । सुन्वः सुनुवः सुन्मः । सुनुमः । सुनोषि । सुनुथः, सुनुथ । सुनोति । सुनतः सुन्वंति । सुन्वे । सुन्वहे । सुनुवहे । सुन्महे । सुनुमहे । सुनुषे । सुन्वाथे । सुनुध्वे । सुनुते । सुन्वाते । सुन्वते । अशूङ् व्याप्तौ । ङकारोकाराविती । न शादिति नकारस्य चुत्वनिषेधः । अश्नुवे । अश्नुवहे । अश्नुमहे । अश्नुषे । अश्नुवाथे । अश्नुध्वे । अश्नुते । अश्नुवाते । अश्नुवते । चिञ् चयने । चिनोमि । चिन्वः । चिनुवः । चिन्मः । चिनुमः । चिनोषि । चिनुथः । चिनुथ । चिनोति । चिनुतः । चिन्वंति । चिन्वे । चिन्वहे । चिनुवहे । चिन्महे । चिनुमहे । चिनुषे चिन्वाथे । चिनुध्वे । चिनुते । चिन्वाते । चिन्वते । लङ्-असुनवं । असुन्व, असुनुव । असुन्म । असुनुम । असुनोः । असुनुतं । असुनुत । असुनोत् । असुनुतां । असुन्वन् । असुन्वि । असुन्वहि । असुनुवहि । असुन्महि । असुनुमहि । असुनुथाः । असुन्वाथां । असुनुध्वं । असुनुत । असुन्वातां । असुन्वत । आश्नु-

वि । आश्नुवहि । आश्नुमहि । आश्नुथाः । आश्नुवाथां । आश्नुध्वं । आश्नुत । आश्नुवातां । आश्नुवत ॥ अचिनवं । अचिन्व । अचिनुव । अचिन्म । अचिनुम । अचिनोः । अचिनुतं । अचिनुत । अचिनोत् । अचिनुतां । अचिन्वन् । अचिन्वि । अचिन्वहि । अचिनुवहि । अचिन्महि । अचिनुमहि । अचिनुथाः । अचिन्वाथां । अचिनुध्वं । अचिनुत । अचिन्वातां । अचिन्वत ॥ लिङि—सुनुयां । सुनुयाव । सुनुयाम । सुनुयाः । सुनुयातं । सुनुयात । सुनुयात् । सुनुयातां । सुनुयुः । सुन्वीय । सुन्वीवहि । सुन्वीमहि । सुन्वीथाः । सुन्वीयाथां । सुन्वीध्वं । सुन्वीत । सुन्वीयातां । सुन्वीरन् । अश्नुवीय । अश्नुवीवहि । अश्नुवीमहि । इत्यादि । निस्पूर्वः । निश्चिनुयां । निश्चिनुयाव । निश्चिनुयाम । इत्यादि । निश्चिन्वीय । निश्चिन्वीवहि । निश्चिन्वीमहि । इत्यादि ॥ लोटि—अभिपूर्वः ।

**७१९ ॥ गेः सुञ्सूसोस्तुस्तुभोऽट्यपि । ५ । ४ । ४७ ।** गेरिण्णंतात् परेषां सुनोति सुवति स्यति स्तौति स्तुभति इत्येतेषां सकारस्य षत्वं भवति अडागमे मध्ये सत्यसत्यपि । अतो हेरित्यधिकृत्य—

**१२० ॥ उतोऽस्फात् । ४ । ४ । १०४ ।** अस्फात् परो य उकारस्तदंतादुत्तरस्य हेर्गुनिमित्तभूतस्योप् भवति । अभिषुणवानि । अभिषुणवाव । अभिषुणवाम । अभिषुणु । अभिषुणुताद् वा । अभिषुणुतं । अभिषुणुत । अभिषुणोतु । अभिषुणुतात् वा । अभिषुणुतां । अभिषुण्वंतु । अभिषुणवै । अभिषुणवावहै । अभिषुणवामहै । अभिषुणुस्व । अभिषुण्वाथां । अभिषुणुध्वं । अभिषुणुतां । अभिषुण्वातां । अभिषुण्वतां । विपूर्वः । व्यश्नवै । व्यश्नवावहै ।

व्यश्नवामहै । व्यश्नुष्व । व्यश्नुवाथां । व्यश्नुध्वं । व्यश्नुतां व्यश्नुवातां । व्यश्नुवतां ॥ निश्चिनवानि । निश्चिनवाव । निश्चिनवाम । निश्चिनु । निश्चिनुतात् वा । निश्चिनुतं । निश्चिनुत । निश्चिनोतु । निश्चिनुताद्वा । निश्चिनुतां । निश्चिन्वंतु । निश्चिनवै । निश्चिनवावहै । निश्चिनवामहै । निश्चिनुष्व । निश्चिन्वाथां । निश्चिनुध्वं । निश्चिनुतां । निश्चिन्वातां । निश्चिन्वतां । इति स्वादिः ।

तुदाञ् व्यथने—अकारोकारावितौ ।

**७२१ ॥ तुद्भ्यः शः २ । १ । ९१ ।** तुदादिभ्यो धुभ्यः कर्तरि गे शो भवति । शपोऽपवादः । शकारः शित्कार्यार्थः । तेन गेऽपीति ङित्वात् "ध्युङः" इत्येप न भवति । तुदामि । तुदावः तुदामः । इत्यादिः । तुदे । तुदावहे । तुदामहे । इत्यादि । मृ प्राणत्यागे । शदेर्गार्दू । इति वर्तमाने—

**१२२ ॥ मृर्लुङ्लिङोश्च । १ । २ । ६९ ।** म्रियतेर्गेपराल्लुङ्लिङोश्च दो भवति । रीङ् ऋतः" इति वर्तमाने—

**७२३ ॥ रिङ् यग्लिङ्शे । ५ । २ । १५० ।** गोर ऋकारांतस्य रिङादेशो भवति । यकि यकारादावगे लिङि शे च परतः । इति रिङादेशः । म्रिये । म्रियावहे । म्रियामहे इत्यादि । मुचल्टृञ् मोक्षणे । ऌकारञकारावितौ ।।"इदिद्धोर्नुम्" इत्यधिकृत्य-

**७२४ ॥ शे मुचां । ५ । १ । ३८ ।** मुचादीना शे परतो नुम् भवति । मुंचामि । मुंचावः मुंचामः इत्यादि । मुंचे । मुंचावहे मुंचामहे । इत्यादि । लङि-अतुदं । अतुदाव : अतुदाम । इत्यादि । अतुदे । अतुदावहि । अतुदामहि । इत्यादि । अम्रिये । अम्रियावहि । अम्रियामहि । इत्यादि । अमुंचं । अमुंचाव । अमुंचाम । इत्यादि । अमुंचे । अमुंचावहि । अमुंचामहि । इत्यादि । लिङि-तुदेयं । तुदेव ।

तुदेम । इत्यादि । तुदेय तुदेवहि । तुदेमहि । इत्यादि । म्रियेयः म्रियेवहि । म्रियेमहि । इत्यादि । मुंचेयं मुंचेव । मुंचेम । मुंचेय । मुंचेवहि । मुंचेमहि । इत्यादि । लोटि—तुदानि तुदाव तुदाम । इत्यादि । तुदं । तुदावहै । तुदामहै । इत्यादि । म्रियै । म्रियावहै । म्रियामहै । इत्यादि । मुंचानि मुंचाव । मुंचाम । इत्यादि । मुंचै । मुंचावहै । मुंचामहै । इत्यादि ।

इति तुदादिः ॥

रुधिर्‌ आवरणे । इरादेरितो निवृत्तिः ।

७२५ ॥ **रुधां श्नं । २ । १ । ९२ ।** रुधादीनां कर्तरि गे परतः श्नं भवति । शपोऽपवादः । मकारो देशविध्यर्थः । शकारः शित्कार्यार्थः । तेन ङित्वादेबभावः । णत्वं । गेऽतः क्ङितीति वर्तमाने—

७२६ ॥ **श्नसोऽल्लः खं । ४ । ४ । १०८ ।** श्नमो विकरणस्यास्तेश्च गोरतः खं भवति गे क्ङिति परतः । चर्त्वं ।

७२७ ॥ **झषः । ५ । ३ । ७७ ।** दधातेरन्यस्माद् झषन्ताद्धोः परयोः तथोर्भष् भवति । इति धत्वं । झलो जश् झशीति पूर्वस्य दत्वं । रुणध्मि । रुंध्वः । रुंध्मः । रुणत्सि । रुंद्धः । रुंद्ध । रुणद्धि । रुंद्धः । रुंधंति । रुंधे । रुंध्वहे । रुंध्महे । रुंत्से । रुंधाथे । रुंद्ध्वे । रुंद्धे । रुंधाते । रुंधते । भुजो रक्षाशनयोः । ओकार इत् । ङेदितो दः" इति वर्तमाने—

७२८ ॥ **भुजोऽत्रे । १ । २ । ७५ ।** न त्रायते न पालयतीत्यत्रः । अस्मिन्नत्रेऽत्रातरि वर्तमानात् भुजेर्दो भवति । चोः कुत्वं चर्त्वं । भुञ्जे । भुञ्ज्वहे । भुञ्ज्महे । भुंक्षे । भुञ्जाथे । भुङ्ग्ध्वे । भुङ्क्ते । भुञ्जाते । भुञ्जते ॥ युजिर्‌ योगे । इरादिरित् । युनज्मि ।

युंज्व: । युञ्ज्म: । युनक्षि । युङ्क्थ: । युङ्क्थ । युनक्ति । युङ्क्त: । युञ्जंति ।

७२९ ॥ ग्युद्युङ्भ्योऽयज्ञपात्रे । १।२।७३। गिपूर्वादुत्पूर्वाच्च युजेरयज्ञपात्रे दो भवति । प्रयुङ्क्ते । प्रयुञ्ज्वहे । प्रयुञ्ज्महे । इत्यादि । उद्युङ्क्ते । उद्युञ्ज्वहे । उद्युञ्ज्महे । इत्यादि । नियमार्थमुद्ग्रहणं । हलंतेषूद एव नान्यस्माद् ।तिन-निर्युनज्मि । इत्यादि । लङ्हल्ङ्याब्भ्य: । सुसिप्त्यनजिति सिप: खे पूर्वस्य च जश्त्वे सिपि रिर्वेति वर्तमाने–

७३० ॥ द: । ५ । ३ । ११० । धोर्दकारांतस्य पदस्य रिर्वा भवति सिपि परत: पक्षे द एव । अरुणध । अरुन्ध्व । अरुन्ध्म: । अरुण: । अरुणत् वा । अरुन्द्ध । अरुन्द्ध । अरुणत् । अरुन्द्धां । अरुंधन् । अरुंधि । अरुंद्वहि । अरुंद्महि । अरुंद्धा: । अरुधाथां । अरुंध्वं । अरुंद्ध । अरुंधातां । अरुंधत । अभुंजि । अभुञ्ज्वहि . अभुञ्ज्महि । अभुङ्था: । अभुंजाथां । अभुङ्ग्ध्वं । अभुङ्क्त । अभुंजातां । अभुंजत । अयुनजं । अयुंज्व । अयुंज्म । अयुनक् । अयुंक्तं । अयुंक्त । अयुनक् अयुंक्तां, अयुंजन् । अयुंजि । अयुंज्वहि । अयुंज्महि । अयुङ्क्था: । अयुंजाथां । अयुग्ध्वं । अयुंक्त । अयुंजातां । अयुंजत ॥ लिङ्— रुंध्यां । रुंध्याम । रुंध्याव । इत्यादि । रुंधीय । रुंधीवहि । रुंधीमहि । इत्यादि । भुंजीय । भुंजीवहि । भुंजीमहि । इत्यादि । युंज्यां । युंज्याव : युंज्याम । युंजीय । युंजीवहि । युंजीमहि । इत्यादि । लोटि । रुणधानि । रुणधाव । रुणधाम । रुंद्धि । रुंद्धात् वा: । रुंद्ध । रुंद्ध । रुणद्धु । रुंद्धात् वा । रुंद्धां । रुंधंतु । रुणधै । रुणधावहै । रुणधामहै । रुंत्स्व । रुंधाथां । रुंद्ध । रुंद्धां । रुंधातां । रुंधतां । भुनजै । भुनजा-

वहै । मुनजामहै । भुंक्ष्व । भुंजाथां । भुंग्ध्वं । भुक्तां । भुंजातां । भुंजतां । युनजानि । युनजाव । युनजाम । युंग्धि, युंक्तात् वा । युंक्तं । युंक्त । युनक्तु, युंक्तात् वा । युंक्तां । युंजंतु । युनजै । युनजावहै । युनजामहै । युंक्ष्व । युंजाथां । युंग्ध्वं । युंक्तां । युंजातां । युंजतां । इति रुधादिः ॥

तनुञ् विस्तारे । ञकारोकाराविती ।

७३१ ॥ **कृञ्तनादेरुः** । २ । १ । ९३ । कृञस्तनादिभ्यश्च कर्तरि गे परतः उर्विकरणो भवति । शपोऽपवादः । तस्य पित्स्वेप् नापित्सु । वकारमकारादौ "वा म्वोः खं" इति उकारस्य खं । तनोमि । तन्वः । तनुवः । तन्मः । तनुमः । तनोषि । तनुथः । तनुथ । तनोति । तनुतः । तन्वंति । तन्वे । तन्वहे । तनुवहे । तन्महे । तनुमहे । तनुषे । तन्वाथे । तनुध्वे । तनुते । तन्वाते । तन्वते । मनुङ् बोधने । ङकारोकाराविती । मन्वे । मन्वहे । मनुवहे । मन्महे । मनुमहे । इत्यादि ॥ डुकृञ् करणे ञकारडुशब्दाविती । लादेश उत्वे एपि च कृते "कुर्यि च" इति वर्तमाने—

७३२ ॥ **गेऽतः कङित्युत्** । ४ । ४ । १०७ । गे कङिति परतः करोतेरुकारांतस्यात उकारादेशो भवति । तकारात्पुनरप् न भवति । "वा म्वोः खं" इति वर्तमाने—

७३३ ॥ **कुर्यि च** । ४ । ४ । १०६ । करोतेः परस्य उतः खं नित्यं भवति यकारादौ म्वोश्च परतः । करोमि । कुर्वः । कुर्मः । करोषि । कुरुथः । कुरुथ । करोति । कुरुतः । कुर्वंति । कुर्वे । कुर्वहे । कुर्महे । कुरुषे । कुर्वाथे । कुरुध्वे । कुरुते । कुर्वाते । कुर्वते । लङि-सम्-पूर्वः । समतनवं । समतन्व । समतनुव । समतन्म । समतनुम । समतनोः । समतनुतं । समतनुत । समतनोत् । सम-

तनुतां । समतन्वन् । समतन्वि । समतन्वहि । समतनुवहि । समतन्महि । समतनुमहि । समतनुथाः । समतन्वाथां । समतनुध्वं । समतनुत । समतन्वातां । समतन्वत ॥ अमन्वि । अमन्वहि । अमनुवहि । इत्यादि । समपूर्वः ।

७३४ । संपर्युपात् कृः सुट् भूषे । ४ । ३ । १२९ । सम् परि उप् इत्येतेभ्यः परस्य कृञः सुडागमो भवति भूषे भूषायामर्थे । गेर्धोः कार्यस्यांतरंगत्वात् सुटि कृते पश्चादडागमः । समस्कुरुत । समस्कुर्व । समस्कुर्म । समस्कुरो: । समस्कुरुतं । समस्कुरुत । समस्करोत् । समस्कुरुतां । समस्कुर्वन् । समस्कुर्वि । समस्कुर्वहि । समस्कुर्महि । समस्कुरुथाः । समकुर्वाथां । समस्कुरुध्वं । समस्कुरुत । समस्कुर्वातां । समस्कुर्वत । लिङि-तनुयां । तनुयाव । तनुयाम । इत्यादि । तन्वीय । तन्वीवहि । तन्वीमहि । इत्यादि । मन्वीय । मन्वीवहि । मन्वीमहि । इत्यादि । कुर्यां । कुर्याव । कुर्याम । इत्यादि । कुर्वीय । कुर्वीवहि । कुर्वीमहि । इत्यादि ॥ लोटि-वितनवानि । वितनवाव । वितनवाम । वितनु, वितनुतात् वा । वितनुतं । वितनुत । वितनोतु, वितनुतात् वा । वितनुतां । वितन्वंतु । वितनवै । वितनवावहै । वितनवामहै । इत्यादि । मनवै । मनवावहै । मनवामहै । इत्यादि । करवाणि । करवाव । करवाम । कुरु, कुरुतात् वा । कुरुतं । कुरुत । करोतु, कुरुतात् वा । कुरुतां । कुर्वंतु । करवै । करवावहै । करवामहै । कुरुष्व । कुर्वाथां । कुरुध्वं । कुरुतां । कुर्वातां । कुर्वतां । इति तनादिः ।

डुक्रीञ् द्रव्यविनमये । डुञावितौ । लडादयः ।

७३५ ॥ क्र्यादेः श्ना । २ । १ । ९५ । डुक्रीञ् इत्येवमादिभ्यः कर्तरि गे श्नेत्ययं विकरणो भवति । शकारः शित्कार्यार्थः ।

तेन ङित्वादेप् न भवति । "हल्यघोरीः" इति ईकारः । श्नरंतादेशः । "श्नाभ्यस्तयोरातः" इत्यात्त्वं । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणासि । क्रीणीथः । क्रीणीथ । क्रीणाति । क्रीणीतः । क्रीणंति । क्रीणे । क्रीणीवहे । क्रीणीमहे । क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणीते । क्रीणाते । क्रीणते ॥ वृञ् संभक्तौ । वृणे । वृणीवहे । वृणीमहे । वृणीषे । वृणाथे । वृणीध्वे । वृणीते । वृणाते । वृणते । ग्रहञ् उपादाने । "लिटीग्यणः साचोऽर्थ्याऽऽज्यं" इति वर्तमाने–

७३६॥वशिव्यधिज्याचिज्याग्रहिव्रश्चिप्रच्छिभ्रस्जां क्ङिति ।४।३।२५। वश्यादीनां किति ङिति च साचो यणः इग् भवति। इति ग्रहेः ऋकारः । गृह्णामि । गृह्णीवः । गृह्णीमः । गृह्णासि । गृह्णीथः । गृह्णीथ । गृह्णाति । गृह्णीतः । गृह्णंति । गृह्णे । गृह्णीवहे । गृह्णीमहे । गृह्णीषे गृह्णाथे । गृह्णीध्वे । गृह्णीते । गृह्णाते । गृह्णते ॥ लङि अक्रीणां । अक्रीणीव । अक्रीणीम । अक्रीणाः । अक्रीणीतं । अक्रीणीत । अक्रीणात् । अक्रीणीतां । अक्रीणन् । अक्रीणि । अक्रीणीवहि । अक्रीणीमहि । अक्रीणीथाः । अक्रीणाथां । अक्रीणीध्वं । अक्रीणीत । अक्रीणातां । अक्रीणत । अवृणि । अवृणीवहि । अवृणीमहि । अवृणीथाः । अवृणाथां । अवृणीध्वं । अवृणीत । अवृणातां । अवृणत । अगृह्णां । अगृह्ण अगृह्णीम । अगृह्णाः । अगृह्णीतं । अगृह्णीत । अगृह्णात् । ह्णीतां । अगृह्णन् । अगृह्णि । अगृह्णीवहि । अगृह्णीमहि । अगृह्णीथाः । अगृह्णाथां । अगृह्णीध्वं । अगृह्णीत । अगृह्णातां । अगृह्णत ॥ लिङि–क्रीणीयां । क्रीणीयाव । क्रीणीयाम । क्रीणीयाः । क्रीणीयातं । क्रीणीयात । क्रीणीयात् । क्रीणीयातां । क्रीणीयुः । क्रीणीय । क्रीणीवहि । क्रीणीमहि । क्रीणीथाः । क्रीणीयाथां । क्रीणीध्वं । क्रीणीत । क्रीणीयातां । क्रीणीरन् । वृणीय । वृणीवहि ।

वृणीमहि । इत्यादि । गृह्णीयां । गृह्णीयाव । गृह्णीयाम । इत्यादि । गृह्णीय । गृह्णीवहि । गृह्णीमहि । इत्यादि ॥ लोटि- क्रीणानि । क्रीणाव । क्रीणाम । क्रीणीहि, क्रीणीतात् वा । क्रीणीतं । क्रीणीत । क्रीणातु, क्रीणीतात् वा । क्रीणीतां । क्रीणंतु । क्रीणै । क्रीणावहै । क्रीणामहै । क्रीणीष्व । क्रीणाथां । क्रीणीध्वं । क्रीणीतां । क्रीणातां । क्रीणतां । वृणै । वृणावहै । वृणामहै । वृणीष्व । वृणाथां । वृणीध्वं । वृणीतां । वृणातां । वृणतां ॥

७३७ ॥ **हौ हलः श्नः शानः** । २ । १ । ९७ । हलंताद्धोः परस्य श्नात्यस्य हौ परे शानादेशो भवति । अतो हेरुप् । गृह्णानि । गृह्णाव । गृह्णाम । गृहाण, गृह्णीतात् वा । गृह्णीतं । गृह्णीत । गृह्णातु, गृह्णीतात वा । गृह्णीतां । गृह्णंतु । गृह्णै । गृह्णावहै । गृह्णामहै । गृह्णीष्व । गृह्णाथां । गृह्णीध्वं । गृह्णीतां । गृह्णातां । गृह्णतां ॥ इति क्रयादिः ।

चुर स्तेये । अकार उच्चारणार्थः ।

७३८ ॥ **चुरादिभ्यो णिच्** । २ । १ । ३६ । चुरादिभ्यो धुभ्यः स्वार्थे णिच् त्यो भवति । चकारो णिङ्णिचोः सामान्यग्रहणविघातार्थः । णकारो णीति सामान्यग्रहणार्थः ।

७३९ ॥ **ध्युङः** । ५ । २ । ९३ । घेरुङः एप् भवति गे चागे च परतः ।

७४० ॥ **तदंता धवः** । २ । १ । ४४ । सन्नाद्यंताः शब्दा धुसंज्ञा भवंति । इति धुसंज्ञायां ततो लडादयः । शबत्रयादेशाः । चोरयामि । चोरयावः । चोरयामः । इत्यादि । छदै संवरणे । ऐकार

१ । ण्युक्षः । २ । ३ । ८६ । इत्यादि सूत्रेष्विति भावः ।

इत् । तेन—एकदेशकृतं लिंग समुदायस्य विशेषणमिति णिजंताद्दो भवति । ऐबिति ञ्णीति च वर्तमाने—

**७४१ ॥ उङोऽतः । ५ । २ । ४** । गोरुङोऽकारस्य ङिणति परतः ऐप् भवति । इत्याकारः । छादये । छादयावहे । छादयामहे । इत्यादि । लक्षञ् दर्शनांकयोः । पूर्ववदन्यत् । लक्षयामि । लक्षयावः । लक्षयामः । इत्यादि । लक्षये । इत्यादि । लङि-अचोरयमित्यादि । अच्छादये । अच्छादयावहि । इत्यादि । अलक्षयमित्यादि । अलक्षये । अलक्षयावहि । अलक्षयामहि । इत्यादि । लिङि-चोरयेयं । चोरयेव । चोरयेम । इत्यादि । छादयेय । छादयेवहि । छादयेमहि । इत्यादि । लक्षयेयं । लक्षयेव । इत्यादि ॥ लक्षयेय । लक्षयेवहि । लक्षयेमहि । इत्यादि । लोटि-चोरयाणि । चोरयाव । चोरयाम । इत्यादि । छादयै । छादयावहै । छादयामहै । इत्यादि । लक्षयाणि । लक्षयाव । लक्षयाम । इत्यादि । लक्षयै । लक्षयावहै । इत्यादि । युज पृच संयमे । "चुरादिभ्यो णिच्" इति वर्तमाने—

**७४२ ॥ युजादेर्वा । २ । १ । ३७** । युजादिभ्यो धुभ्यः स्वार्थे णिच् स्यो वा भवति । पक्षे-न्याय्यविकरणः शप् । पूर्ववच्छेष । योजयामि । योजयावः । योजयामः । योजामि । योजावः । योजामः । इत्यादि ॥ अर्चै पूजायां । ऐकार इत् । णिजभावपक्षे एदित्सावकाश इति णिचि दो न भवति । अर्चयामि । अर्चे । इत्यादि । वृञ् आवरणे । अकार इच्चरितार्थोऽणिच्पक्षे इति णिजंताद्दो न भवति । वारयामि । वरामि । वरे इत्यादि । लङि-अयोजयं । अयोजमिति । आर्चयं, आर्चे इत्यादि । अवारयं । अवरं । अवरे । इत्यादि । लिङि-योजयेयं । योजेयम् । इत्यादि । अर्चयेयं । अर्चेय । इत्यादि । वारयेयं । वरेयं । इत्यादि । लोटि-योजयानि । इत्यादि । अर्चयानि ।

अर्चै। वारयाणि। वराणि। वरै। इत्यादि समुन्नेयं।

इति कर्तृगलकारपरिच्छेदः।

यदा तु—

**७४३ ॥ लः कर्मणि च भावे च धेः। २। ४। ५७।** नव लकारास्त्यक्तविशेषणाः सकमकेभ्यो धुभ्यः कर्माणि चकारात्कर्तरि भवंति। धिसंज्ञभ्यो भावे कर्तरि च भवंति। इति कर्मभावयोर्लो भवंति। तदा—

**७४४ ॥ लौ। १। २। ७।** भावे कर्मणि च यो लकारस्तस्य दो भवति। तत्र—

**७४५ ॥ गे यक्। २। १। ८१।** ङित्याचिनि गे परतो धोर्यक् त्यो भवति, न शबादयः। ककारः किस्कार्यार्थः। पूर्ववदेत्वादि। भावकर्मणोस्तुल्यं रूपं। परं भावे त एव भवति। लकाराभिधेयभावस्यैकत्वादयुस्मदस्मद्विषयत्वाच्च लकारेण नाभिहिते कर्तरि कर्तृवाचिनो मृदोभा॥ भू सत्तायाः क्रियायाः अकर्मकत्वाच्च भू इत्वे तस्मात् भावे लकाराः भवंति। भूयते देवदत्तेन विदुषा। भूयते देवदत्ताभ्यां विद्वद्भ्यां। भूयते देवदत्ताजिनदत्तगुरुदत्तैर्विद्वद्भिः। त्वया भूयते। मया भूयते। यद्यपि साधनभेदे वास्तवः क्रियाभेदः। तथापि स शब्देन नोपादीयते। इत्येकवचनमेव भवति। "अकर्मका अपि धवः सगयः सकर्मका भवंति" इति वचनादयं गिपूर्वः सकर्मको भवति। इति अनुपूर्वः। अनुभूये। अनुभूयावहे। अनुभूयामहे। अनुभूयसे। अनुभूयाथे। अनुभूयध्वे। अनुभूयते। अनुभूयेते। अनुभूयंते। एवमभिपूर्वः। अभिभूये। अभिभूयावहे। अभिभूयामहे। इत्यादि। तथा–लङादिषु–अभूयत। अन्वभूये। इत्यादि। भूयेत। अनुभूयेय। इत्यादि। भूयतां। अनुभूयै। इत्यादि। एवं—एध्यते। ऐध्यत।

एध्येत । एध्यतां । पच्यते । अपच्यत । पच्येत । पच्यतां । नंद्यते । अनंद्यत । नंद्येत । नंद्यतां । "हलुङः क्ङित्यनदितः, इति नखं । प्रध्वस्यते । प्राध्वस्यत । प्रध्वस्येत । प्रध्वस्यतां । एषोऽश्या इत्यधिकृत्य-

७४६ ॥ ध्योऽलिटि । ४ । ३ । ४५ । ध्येञो धोरलिटि अशिद्विषये आत्वं भवति । स्वव्यच्छ्रयादेरिति साचो यण इक् । हलो यणिक इति दीः । वीयते । अवीयत । वीयेत । वीयतां । "यि क्ङित्ययङ्" इति वर्तमाने—

७४७ ॥ दीश्च्व्यकृद्रे । ५ । २ । १४८ । च्वावकृद् यकारे अगयकारे च गोर्दीर्भवति । हूयते । अहूयत । हूयेत । हूयतां हायते । अहायत । हायेत । हायतां । "ईर्थ" इति वर्तमाने—

७४८ ॥ भूमास्थागापाहाक्सां हलि । ४ । ४ । ६९ । भूसंज्ञकानां मा स्था गा पा हाक् सा इत्येतेषां च घूनां हलादौ क्ङित्यगे परतः ईत्वं भवति । विधीयते । व्यधीयत । विधीयेत । विधीयतां । अद्यते । आद्यत । अद्येत । अद्यतां ।

७४९ ॥ यि क्ङित्ययङ् । ५ । २ । १४५ । शीङो यकारादौ क्ङिति परतः अयङादेशो भवति । अधिशय्यते । अध्यशय्यत । अधिशय्येत । अधिशय्यतां । क्ङित्येऽदोऽगे जग्धिरिति वर्तमाने-

७५० ॥ ब्रस्तेर्वच्भूः । १ । ४ । १११ । ब्रूञोऽस्तेश्च यथासंख्यं वच् भू इत्येतावादेशौ भवतोऽगे परतः । स्वव्यच्छ्रयादेरिति साचो यण इक् । उच्यते । औच्यत । उच्येत । उच्यतां । दीव्यते । अदीव्यत । दीव्येत । दीव्यतां । प्रसूयते । प्रासूयत । प्रसूयेत । प्रसूयतां । सन्नह्यते । समनह्यत । सन्नह्येत । सन्नह्यतां । अभिषूयते । अभ्यषूयत । अभिषूयेत । अभिषूयतां । अश्यते ।

आश्यत । अश्येत । अश्यतां । निश्चीयते । निरश्चीयत । निश्चीयेत । निश्चीयतां । तुद्यते । अतुद्यत । तुद्येत । तुद्यतां । म्रियते । अम्रियत । म्रियेत । म्रियतां । मुच्यते । अमुच्यत । मुच्येत । मुच्यतां । रुध्यते । अरुध्यत । रुध्येत । रुध्यतां । भुज्यते । अभुज्यत । भुज्येत । भुज्यतां । युज्यते । अयुज्यत । युज्येत । युज्यतां ।

७५१ ॥ **तनेर्यकि** । ४ । ३ । ४८ । तनोतेराकारो यकि परतो वा भवति । तायते । तन्यते । अतायत । अतन्यत । तायेत । तन्येत । तायतां । तन्यतां । मन्यते । अमन्यत । मन्येत । मन्यतां । क्रियते । अक्रियत । क्रियेत । क्रियतां । विक्रीयते । व्यक्रीयत । विक्रीयेत । विक्रीयतां । संव्रियते । समव्रियत । संव्रियेत । संव्रियतां । गृह्यते । अगृह्यत । गृह्येत । गृह्यतां । "अगे" खमिति चानुवर्तमाने ।

७५२ ॥ **णेः** । ४ । ४ । ५६ । णेः खं भवत्यगे परतः । चोर्यते । अचोर्यत । चोर्येत । चोर्यतां । छाद्यते । अछाद्यत । छाद्येत । छाद्यतां । लक्ष्यते । अलक्ष्यत । लक्ष्येत । लक्ष्यतां । योज्यते । अयोज्यत । योज्येत । योज्यतां । युज्यते । अयुज्यत । युज्येत । युज्यतां । अर्च्यते । आर्च्यत । अर्च्येत । अर्च्यतां । णिजभावेऽप्यविशेषः । वार्यते । अवार्यत । वार्येत । वार्यतां । व्रियते । अव्रियत । व्रियेत । व्रियतां । इत्यादि सप्रपंचमत्रगम्यान्नेयं ॥ अपि च कस्यांचित् धोः कश्चिदर्थभागः कर्मस्थप्रधानः फलरूपी विक्लेदादिः । कश्चिद् कर्तृस्थप्रधानः भावनाक्रियाधिश्रयणादिः । तत्र यदा कर्मस्थे स्वस्यार्थभागे सुकरत्वेन वा कर्मण्यध्यारोपितायां भावनायां धुर्वर्तते, तदा तत्कर्मकर्ता भवति । तत्र लकारे—

७५३ । **कर्मवल्लेऽस्नुादीनां** ।२।१।७६। कर्मकर्तरि लकारो

सति तदंतस्य धोः स्नवस्यादिवर्जितस्य कर्मणीव कार्यं भवति । यथा कर्मणि दयकूञिटो भवंति । तथा तत्रापीत्यर्थः । कर्मकर्तर्यपि तान्येवोदाहरणानि भवंति । कर्मकर्तृभावाभिव्यक्त्यर्थं स्वयमेवेत्यनुप्रयुज्यते । अनुभूयेऽहं स्वयमेव । अनुभूयावहे । अनुभूयामहे स्वयमेव । इत्यादि । एवं पच्यते ओदनः स्वयमेव । विक्लिद्यतीत्यर्थः । इत्यादि नेयं ।

इति यक्परिच्छेदो द्वितीयः ।

कर्तरि शेषलकारा नीयंते । भू इति स्थिते "लोट् चाशिषि" इति पक्षे लिङ् । ङकारेकारौ पूर्ववदितौ । मिङादयश्च । "लेः सीयुट्" "ङ्यासुण्मे" इति वर्तमाने—

७५४ ॥ **किदाशिषि** । २ । ४ । ८६ । आशिष्यर्थे लिङो ङ्यासुट् किद् भवति । शेषोऽग एव इत्यधिकारे लिङाशिषीत्यगसंज्ञत्वाच्छवनंत्यसखे न भवतः । स्फादेः स्कोऽने चेति झलि सखं । भूयासं । भूयास्व । भूयास्म । भूयाः । भूयास्तं । भूयास्त । भूयात् । भूयास्तां । भूयासुः । दविधौ सीयुट् । झटो रन्तौ ।

७५५ ॥ **तथोः सुट्** । २ । ४ । ८८ । लिङादेशावयवयोस्तकारथकारयोः सुडागमो भवति । व्योः खं वल्कात्विति यखं । वलादेरिडिति इट् । स्यादेशयोरिति षत्वं ष्टुत्वं ।

७५६ ॥ **वेण्ञेः** । ४ । ५ । ६४ । इणः परस्मात् इटो ञेश्चोत्तरेषां षीध्वंलुङ्लिटां धकारस्य ढकारादेशो भवति वा । एववादेशौ । व्यतिभविषीय । व्यतिभविषीवहि । व्यतिभविषीमहि । व्यतिभविषीष्ठाः । व्यतिभविषीयास्थां । व्यतिभविषीध्वं । व्यतिभविषीढ्वं । व्यतिभविषीष्ट । व्यतिभविषीयास्तां । व्यतिभविषीरन् ॥ एधिषीय । एधिषीवहि । एधिषीमहि । एधिषीष्ठाः । एधिषीयास्थां । एधिषीध्वं । एधिषीष्ट । एधिषीयास्तां । एधिषीरन् ॥ पच्यासं । प-

ध्यास्व । पच्यास्म । पच्याः । पच्यास्तं । पच्यास्त । पच्यात् । पच्यास्तां । पच्यासुः । एकाच् घस इति "न वृद्भ्यः" इति च वर्तमाने-

**७५७ ॥ ळौदिदचोऽपश्विश्रिशीडीरुषट्कोदृदृतः । ५ । १ । १२३ ।** लकारेत औकारेतोऽजंताच्च गेरेकाचः परस्य वलाद्यगस्येट् न भवति पत् श्वि श्रि शी डी रुषट्कं ऊदंत वृ ऋदंत अदंत इत्येतान् वर्जयित्वा । औकारेत्त्वात् पचेः सीयुट इट् न भवति । पक्षीय । पक्षीवहि । पक्षीमहि । पक्षीष्ठाः । पक्षीयास्थां । पक्षीध्वं । पक्षीष्ट । पक्षीयास्तां । पक्षीरन् ॥ नंद्यासं । नंद्यास्व । नंद्यास्म । इत्यादि । ध्वंसिषीय । ध्वंसिषीवहि । ध्वंसिषीमहि । इत्यादि । वियासं । वियास्व । वियास्म । इत्यादि । ळौदिदच इत्यजंतत्वात् व्येञ इट् न भवति । व्यासीय । व्यासीवहि । व्यासीमहि । इत्यादि । हूयासं । हूयास्व । हूयास्म । इत्यादि ।

**७५८ ॥ इणः षीध्वंलुङ्लिटां धो ढः । ५ । ४ । ६३ ।** इणः परेषां षीध्वं लुङ् लिटां धकारस्य ढकारो भवति । इति ढत्वं । व्यतिहोषीय । व्यतिहोषीवहि । व्यतिहोषीमहि । व्यतिहोषीष्ठाः । व्यतिहोषीयास्थां । व्यतिहोषीढ्वं । व्यतिहोषीष्ट । व्यतिहोषीयास्तां । व्यतिहोषीरन् । हासीय । हासीवहि । हासीमहि । इत्यादि ।

**७५९ ॥ लिङ्येत् । ४ । ४ । ७० ।** भूमादीनां किति लिङि परतः एकारो भवति । विधेयासं । विधेयास्व । विधेयास्म । इत्यादि । श्रित्पूर्वः । श्रद्धासीय । श्रद्धासीवहि । श्रद्धासीमहि । इत्यादि । अद्यासं । अद्यास्व । अद्यास्म । इत्यादि । औकारेदित्वादनिट् । व्यत्यस्सीय । व्यत्यस्सीवहि । व्यत्यस्सीमहि । इत्यादि । "वेणूत्रेः" इति पक्षे ढत्वं । शयिषीय । शयिषीवहि । शयिषीमहि । शयिषीष्ठाः । शयिषीयास्थां । शयिषीढ्वं, शयिषीध्वं । शयिषीष्ट ।

शयिषीयास्तां। शयिषीरन्॥ उच्यासं। उच्यास्व। उच्यास्म। इत्यादि। ब्रूञः स्थानिवद्भावेन वचेरनिडर्थः औकार इत्यनिट्। वक्षीय। वक्षीवहि। वक्षीमहि। इत्यादि। दीव्यासं। दीव्यास्व। दीव्यास्म। इत्यादि। व्यतिदीविषीय। व्यतिदीविषीवहि। व्यतिदीविषीमहि। इत्यादि। वा लिङ्सिचाविति वर्तमाने—

**७६०॥ ऊदिद्भ्यः। ५।१।१००।** ऊदितो धोर्घ्नश्च परस्य वलादेरिड् वा भवति। पक्षे इट्। इट्पक्षे वर्णैरिति वा दत्वं। प्रसविषीय। प्रसविषीवहि। प्रसविषीमहि। प्रसविषीष्ठाः। प्रसविषीयास्थां। प्रसविषीध्वं, प्रसविषीढ्वं। प्रसविषीष्ट। प्रसविषीयास्तां। प्रसविषीरन्। अनिट्पक्षे—इणः षीध्वमिति नित्यं ढत्वं। प्रसोषीय। प्रसोषीवहि। प्रसोषीमहि। प्रसोषीष्ठाः। प्रसोषीयास्थां। प्रसोषीढ्वं। प्रसोषीष्ट। प्रसोषीयास्तां। प्रसोषीरन्॥ संनह्यासं। संनह्यास्व। संनह्यास्म। इत्यादि। औकारत्वादनिट्।

**७६१॥ नहो धः। ५।३।६९।** नहेर्धो झलि च पदांते च धकारो भवति। इति धत्वं। नत्सीय। नत्सीवहि। नत्सीमहि। इत्यादि। अभिषूयासं। अभिषूयास्व। अभिषूयास्म। इत्यादि। सोषीय। सोषीवहि। सोषीमहि। इत्यादि। "ऊदिद्भ्यः" इति ऊदित्वात्पक्षे इट्। अशिषीय। अशिषीवहि। अशिषीमहि। इत्यादि। अनिट्पक्षे—व्रश्चेत्यादिना षत्वं।

**७६२॥ षढोः कस्सि। ५।३।७९।** षकारढकारयोः ककारादेशो भवति सकारादौ परतः। इति ककारः। अक्षीय। अक्षीवहि। अक्षीमहि। इत्यादि॥ निश्वियासं। निश्वियास्व। निश्वियास्म। निश्विषीय। तुद्यासं॥ सीकः, हल्कीति च वर्तमाने—

**७६३॥ सिलौ दे। १।१।१००।** दपरे सिस्ये लौ

लिङि च सकारादौ परे यो हल् तस्मिन् परे य इक् तस्य किद्वद् कार्यं भवति। इति कित्त्वात् "ध्युङः" इत्येब् न भवति। तुत्सीय।

७६४ ॥ उः । १ । १ । १०१ । ऋवर्णान्तस्य धोः सकारादौ सिलौ दे परे किद्वद् कार्यं भवति। कित्त्वात् गागयोरित्येप् न भवति। मृषीय। मुच्यासं। मुक्षीय। रुध्यासं। रुत्सीय। भुक्षीय। भुज्यासं। युक्षीय। तन्यासं। तनिषीय। मनिषीय। क्रियासं। कृषीय। क्रियासं। क्रिषीय। वृतो वेति वर्तमाने—

७६५ ॥ लिङ्स्योर्दे । ५ । १ । ९८ । वृञः परयोः लिङ् सि इत्येतयोः दविषययोरिड्वा भवति। वरिषीष्ट, वृषीष्ट वा। गृह्यात्।

७६६ ॥ गृहोऽलिट्येकाचो दीः । ५ । १ । ९९ । गृहेरेकाचः परस्य इटो दीर्वा भवति न चेत् स इट् लिटि विहितः। बलादेरिटो दीः। गृहिषीष्ट। गृहीषीष्ट। णेरिति णिखं। चोर्यासं। चादयिषीष्ट। लक्ष्यासं। लक्षयिषीष्ट। योज्यासं। युज्यासं। अर्च्यासं। अर्चिषीष्ट। वार्यासं। व्रियासं। वरिषीष्ट। वृषीष्ट। इत्यादि सविस्तरमधिगंतव्यं॥ लिडुदाह्रियते। भू इति स्थिते-" भूते" अनद्यतने,, इति चानुवर्तमाने—

७६७ ॥ परोक्षे लिट् । २ । २ । १०८ । अक्षेभ्यःपरावृत्तं परोक्षं स्वयं साक्षादनाधिगतं तत्र परोक्षे भूतेऽनद्यतनेऽर्थे वर्तमानाद्धोः लिडित्ययं त्यो भवति। टकारो टिद्दटेरेरिति विशेषणार्थः। इकारो लिटः क्वसुकानाविति विशेषणार्थः। पूर्ववन्मिबादयः। तेषां—

७६८ ॥ मानां णश्वमथाथुसशणशतुसुसः ।२।४।६९। द्विते लेरादेशानां मानां नवानां यथासंख्यं णश् व म थ अथुस अश्

णश् अतुस् उस् इत्येते नवादेशाः भवंति । इति णशादयः । णशा- वितौ । शित् सर्वादेशार्थः । परत्वादेपि प्राप्त–नित्यत्वाद्-"अचि" भ्व-" इति चानुवर्तमाने—

७६९ ॥ **लुङ्लिटोर्वुक्** । ४ । ४ । ८५ । लुङ्लिटो- राचि परतो भवतेर्वुगागमो भवति । ककारोकारावितौ । शेषोऽग एव, इति वर्तमाने—

७७० ॥ **लिट्** । २ । ४ । ९६ । लिट् चागसंज्ञो भवति । इत्यगस्य वलादेरिट् प्राप्तः ।

७७१ ॥ **लिटींध्यस्फाद् किद्वत्** । १ । १ । ९३ । इंधेर- न्यस्माच्च धोरस्फादापिति लिटि परतः कितीव कार्यं भवति । इति कित्त्वात्—"एकाचः" न वृद्ध्यः" इत्यधिकृत्य—

७७२ ॥ **कित्यूर्णुञ्श्र्युकः** । ५ । १ । १२५ । ऊर्णुञः श्रयतेरुगंताच्चैकाचो विहिते किति नेट् भवति । इति निषिद्धः ।

७७३ ॥ **भृसृवृस्तुद्रुस्रुश्रोर्लिटि** । ५ । १ । १२७ । भृ सृ वृ स्तु द्रु स्रु श्रु इत्येतेभ्य एव लिटि नेट् भवति नान्येभ्यः । इति नियमान्निषिद्धो निवर्तते । पुनर्भवत्येवेट् । आदेरकाचो द्वे, इत्य- धिकृत्य-लिडुचूकचि धोः, इति द्वित्वं ।

७७४ । **पूर्वं चः** । ४ । ३ । ११ । द्विरुक्तयोः पूर्वोऽवयवः चसंज्ञो भवति । इति चसंज्ञायां । चस्येति वर्तमाने–

७७५ ॥ **हलोऽनादेः** । ५ । २ । १८० । चस्य संबंधि- नो हलोऽनादेरुप् भवति । इति वकारस्योप् ।

७७६ ॥ **पः** । ५ । २ । १८२ । चस्य संबंधिनोऽचः प्रादेशो भवति । इत्यूकारस्य उकारः ।

७७७ ॥ भुवोऽत् । ५ । २ । १९६ । भवतेश्चस्य लिट्य-कारादेशो भवति । इत्युकारस्यात्वं । झलो जशीति भकारस्य बकारः । बभूव । बभूविव । बभूविम । बभूविथ । बभूवथुः । बभूव । बभूव । बभूवतुः । बभूवुः । दस्य–ढिद्देटेररित्येत्वं । थासः सेभावः । वण्ऽ-रिति च्वमो वा ढत्वं ।

७७८ ॥ लस्तझस्यैशिरे । २ । ४ । ६९ । लेर्लिटस्त-झयोर्यथासंख्यं एश् इरे इत्येतावादेशौ भवतः । पूर्ववल्लिट् वुक् च कार्यं । व्यतिबभूवे । व्यतिबभूविवहे । व्यतिबभूविमहे । व्यतिबभू-विषे । व्यतिबभूवाथे । व्यतिबभूविढ्वे । व्यतिबभूविध्वे । व्यतिब-भूवे । व्यतिबभूवाते । व्यतिबभूविरे । लिड्वत्कृञोऽस्मीति वर्तमाने–

७७९ ॥ सर्विजादिदयायासोऽनृच्छूर्णोः । २ । १ । ४८ । सह रुणा वर्तमानात् इजादेर्धोर्दय् अय् आस् इत्येतेभ्यश्चाम् भवति लिड्वत् कृञि परतः ऋच्छत्यूर्णोतिं वर्जयित्वा । कृञोऽस्मीति प्रत्या-हारेण कृभ्वस्तीनां त्रयाणां ग्रहणं । तस्मिन्नामंतं पदमिदमनतरं प्रयुज्यते ।

७८० ॥ आम्वत्तत्कृः । १ । २ । ७१ । आमंतस्यैव तत्कृञो दो भवति । इति लिटो दः । तस्य पूर्ववदैत्वादि । कित्त्वा ल्लिट्येप् न भवति । यणादेशस्यानिवद्भावेन द्वित्वं ।

७८१ ॥ उरः । ५ । २ । १८३ । चस्य ऋकारस्य अ-कारादेशो भवति । झित्वादामंतस्य सुप उप् । त्यखे त्याश्रयमिति पदत्वं । नुम्मोऽमित्यनुस्वारः । वा नुक् पदांतस्येति विकल्पेन परस्वत्वं । एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे । एधाञ्चकृषे । एधाञ्चक्राथे । एधांचकृढ्वे । एधांचक्रे । एधांचक्राते । एधांचक्रिरे । एधांबभूव । एधांबभूविव । एधांबभूविम । एधांबभूविथ । एधांबभूवथुः । एधांबभूव ।

एधांबभूव । एधांबभूवतुः । एधांबभूवुः । अस् असिति द्वित्वं । हलो-ऽनादेरिति स उप् । चस्येति दीरिति च वर्तमाने—

**७८२ ॥ आद्यतः । ५ । २ । ११३ ।** लिटि परतः आदेरतश्चस्य दीर्भवति । इति दीत्वं । पुनः स्वेको दीः । एधामास । एधामासिव । एधामासिम । एधामासिथ । एधामासथुः । एधामास । एधामास । एधामासतुः । एधामासुः । "उडोऽतः" इत्यैप् । "भ्वसो ह्यचखे" इति वर्तमाने—

**७८३ ॥ हल्मध्ये लिट्यतः । ४ । ४ । ११७ ।** हलो मध्ये वर्तमानस्यात एत्वं भवति चस्य च खं लिटि परतः । इत्येचखे । थे भ्रादिनियमात् नित्यमिटि प्राप्ते —

**७८४ ॥ वाऽऽत्वदचसृजृदृशो नित्यानिट्थासस्थेऽस्क-द्व्यार्त्तेः । ५ । १ । ११७ ।** नित्यानिट् तास् येषां तेभ्योऽकारवद्भ्योऽजंतेभ्यः सृजदृश् इत्येताभ्यां च विहिते थे वा इट् भवति स्कृ अद् व्या अर्त्ति इत्येतान् वर्जयित्वा । इति यदा इट् तदा सटीत्येत्वचखे भवतः । अन्यत्र चोः कुत्वं । पूर्ववदन्यत् । पपच । पपाच । पेचिव । पेचिम । पपक्थ । पेचिथ । पेचथुः । पेच । पपाच । पेचतुः । पेचुः । पेचे । पेचिवहे । पेचिमहे । इत्यादि । पेचिषे । पेचाथे । पेचिध्वे । पेचे । पेचाते । पेचिरे ॥ ननंद । ननंदिव । ननंदिम । इत्यादि । दध्वंसे । दध्वंसिवहे । दध्वंसिमहे । इत्यादि । "द्वे" चस्येति च वर्तमाने—

**७८५ ॥ लिटीग्यणः साचोऽर्य्याऽऽज्यं । ४ । ३ । १९।** आ ज्या इत्येतस्माद् यो धुर्निर्दिश्यते तस्य लिटि द्वित्वे सति चस्य साचः परेणाचा सह वर्तमानस्य अर्य्य—अरेफयकारपरस्य यणः स्थाने इगादेशो भवति ॥ ञ्णित्यच इत्यैप् । आयादेशः । अपित्सु लिटः

क्दिद्भावात स्वव्यच्छयोदेरिति साचो यण इक । " एर्गिवाक्चादु-क्वोऽसुधय:, इति यणादेश: । पूर्ववच्छेषं । विव्याय । विव्यय । विव्यिव । विव्यिम । विव्ययिथ । विव्यथु: । विव्य । विव्याय । विव्यतु: । विव्यु: ॥ पूर्ववत् णशादिषु कृतेषु पित्स्वंबादि । कित्सुवादेश: । थे वेट् । स्थानिवद्भावेन द्वित्वादि । जुहुव । जुहाव । जुहुविव । जुहुविम । जुहुविथ । जुहोथ । जुहुवथु: । जुहुव । जुहाव । जुहुवतु: । जुहुवु: । व्यतिजुहुवे । व्यतिजुहुविवहे । व्यतिजुहुविमहे । व्यतिजुहुविषे । व्यतिजुहुवाथे । व्यतिजुहुविध्वे । व्यतिजुहुविद्वे । व्यतिजुहुवे । व्यतिजुहुवाते । व्यतिजुहुविरे । पक्षे लिङ्कृञामीति वर्तमाने —

७८६ ॥ भीह्रीभृहोरुज्वत् । २ । १ । ५० । भी ह्री भृ हु इत्येतेभ्यो लिङ्याम् कृञ्यां भवति वा स च उज्वत् । उचि कार्यं द्वित्व-मित्वं चातिदिश्यते । द्वित्वे जश्त्वे च सत्येबवादशौ । फलेशे द: प्राप्त: ।

७८७ ॥ न । १ । २ । ७२ । आम्वत तत्कृञ: फलेशे दो न भवति । इति प्रतिषिद्ध: । वलादावट् प्राप्त: ।

७८८ ॥ कृञोऽस्कु: । ५ । १ । १२८ । सुट्वर्जितात्कृञो विहिते लिटि नेट् भवति । इति निषिद्ध: । थेऽप्ययमेव परत्वान्निषेधो, न विकल्प: । शेषं पूर्ववत । जुहुवांचकार । जुहुवांचकर ।

७८९ ॥ वाऽस्मणणश् ।१।१७२। अस्मदो णश् वा णिद् भवति । इति पक्षे णिद्द्भाव: । जुहुवांचकृव । जुहुवांचकृम । जुहु-वांचकर्थ । इत्यादि । व्यतिजुहुवांचक्रे । व्यतिजुहुवांचकृवहे । व्यति जुहुवांचकृमहे । इत्यादि ।

७९० ॥ इटि चात्खं ।४।४।६७। इटि अजादौ चागे क्ङिति परे आकारांतस्य खं भवति । इत्यात्खं । जहे । जहिवहे । जहिमहे ।

७९१ ॥ आतो णल औ । ५ । २ । ३६ । गोरांकारांतात्परस्य लिटो णल: औकारादेशो भवति । इत्यौत्वं । दधौ । दधिव । दधिम । दधिथ । दधाथ । दधथुः । दध । दधौ । दधतुः । दधुः । दधे । दधिवहे । दधिमहे । इत्यादि । अदः,, घस्लृ,, इति चानुवर्तमाने

७९२ ॥ लिटि वा । १ । ४ । १३० । अदो घस्लृभावो वा भवति लिटि परतः । लृकार इत् । द्वित्वादि कार्यं ।

७९३ ॥ गमहनजनखनघसोऽनाङि । ४ । ४ । २४ । गमादीनां हलुङः क्ङित्यजादावनाङि खं भवति । "शास्वस्घसां" इति षत्वं । पूर्ववच्छर्वं । जक्ष । जघास । जक्षिव । जक्षिम । जघसिथ । जक्षथुः । जक्ष । जघास । जक्षतुः । जक्षुः । व्यतिजक्षे । व्यतिजक्षिवहे । व्यतिजक्षिमहे । व्यतिजक्षिषे इत्यादि । घस्लादेशाभावे-आद । आदिव । आदिम । आदिथ । आदथुः । आद । आद । आदतुः । आदुः । व्यत्यादे । व्यत्यादिवहे । व्यत्यादिमहे । इत्यादि । अतिशिश्ये । अतिशिश्यिवहे । अतिशिश्यिमहे । अतिशिश्यिषे । अतिशिश्याथे । अतिशिश्यिढ्वे । अतिशिश्यिध्वे । अतिशिश्ये । अतिशिश्याते । अतिशिश्यिरे ॥ पूर्ववद् ब्रञो वचः साचो यणः इक् । अपिति स्वब्वच्छ्यादेरिति इक् । उवचे । उवाच । ऊचिव । ऊचिम । उवचिथ । उवक्थ । ऊचथुः । ऊच । उवाच । ऊचतुः । ऊचुः । ऊचे । ऊचिवहे । ऊचिमहे । इत्यादि । द्वित्वादिकं । "य्युङः" एप् च । दिदेव । दिदिविव । दिदिविम । दिदिविथ । दिदिवथुः । दिदिव । दिदेव । दिदिवतुः । दिदिवुः । व्यतिदिदिवे । व्यतिदिदिविवहे । व्यतिदिदिविमहे । इत्यादि ॥ सुषुवे । सुषुविवहे । सुषुविमहे । सुषुविषे । इत्यादि ॥ ननह । ननाह । नेहिव । नेहिम । नेहिथ । ननद्ध । नेहथुः । नेह । ननाह । नेहतुः । नेहुः । नेहे । नेहिवहे ।

नेहिमहे । इत्यादि । सुषव । सुषाव । सुषुविव । सुषुविम । सुषु-विथ । सुषोथेत्यादि । सुषुवे । सुषुविवहे । सुषुविमहे । इत्यादि । "आद्यतः" इति दीत्वं । "नुक्" इत्यधिकृत्य–

**७९४ ॥ अश्नोः । ५ । २ । १९५ ।** अश्नोतेर्लिटि चस्य कृतद्वित्वस्य नुगागमो भवति । व्यानशे । व्यानशिवहे । व्यानशि-महे । व्यानशिषे । इत्यादि ।

**७९५ ॥ वा चेः । ५ । २ । ७१ ।** चिनोतेश्चात्परस्य वा कुत्वं भवति सन्‌लिटोः परतः । चिकय, चिकाय । चिक्यिव । चि-क्यिम । चिकयिथ, चिकेथ । चिक्यथुः । चिक्य । चिकाय । चिक्य-तुः । चिक्युः । चिचय । चिचाय । चिच्यिव । चिच्यिम । चिचयिथ, चिचेथ । चिच्यथुः । चिच्य । चिचाय । चिच्यतुः । चिच्युः । चि-क्ये । चिक्यिवहे । चिक्यिमहे । इत्यादि । चिच्ये । चिच्यिवहे । चिच्यिमहे । इत्यादि । तुतुदे । तुतुदिवहे । तुतुदिमहे । तुतुदिषे । "न वृद्भ्यः" थे इति च वर्तमाने—

**७९६ ॥ ऋतः । ५ । १ । ११८ ।** ऋकारांताद्धोर्विहिते थे नेट् भवति । ममर । ममार । मम्रिव । मम्रिम । ममर्थ । इत्यादि । मुमोच । मुमुचिव । मुमुचिम । मुमोचिथ इत्यादि । मुमुचे । मुमु-चिवहे । मुमुचिमहे । इत्यादि । रुरोध । रुरुधिव । रुरुधिम । रुरोधिथ । रुरुधे । रुरुधिवहे । रुरुधिमहे । इत्यादि । बुभुजे । बुभुजिवहे । बुभुजिमहे । बुभुजिषे । इत्यादि । युयोज । युयुजिव । युयुजिम । युयोजिथ । इत्यादि । युयुजे । युयुजिवहे । युयुजिमहे । इत्यादि । ततन । ततान । तेनिव । तेनिम । तेनिथेत्यादि । तेने । तेनिवहे । तेनिमहे । मेने । मेनिवहे । मेनिमहे । इत्यादि । "कृञो-ऽस्कुः" इत्यनिट् । चकर । चकार । चकृव । चकृम । चकर्थ ।

इत्यादि । चक्रे । चकृवहे । चकृमहे । इत्यादि । तस्यैव संपूर्वस्य "संपर्युपात् कुः सुट् भूषे,, इति सुट् ।

१९७ ॥ स्फात्वृदर्तेरेप् । ५ । २ । १३५ । स्फादेः ऋदकारांतस्य गोरर्तेश्च लिटि परतः एप् भवति । संचस्कार । संचस्करिव । संचस्करिम । संचस्करिथ । इत्यादि । संचस्करे । संचस्करिवहे । संचस्करिमहे संचस्करिषे । संचस्कराथे संचस्करिध्वे । संचस्करिढ्वे । संचस्करे संचस्कराते । संचस्करिरे ॥ चिक्रय । चिक्राय । चिक्रयिव । चिक्रयिम । चिक्रयिथ । चिक्रेथ । चिक्रियथुः । चिक्रिय । चिक्राय । चिक्रियतुः । चिक्रियुः । चिक्रिये । चिक्रियिवहे । चिक्रियिमहे । चिक्रियिषे ॥ इत्यादि । वव्रे । ववृवहे । ववृमहे । ववृषे । वव्राथे । ववृढ्वे । वव्रे । वव्राते । वव्रिरे । वशिज्यधिज्यचिज्याग्रहीत्यादिना यण इक् । अनुजग्राह । अनुजगृहिव । अनुजगृहिम । अनुजगृहिथ । इत्यादि । अनुजगृहे । अनुजगृहिवहे । अनुजगृहिमहे । इत्यादि । चोरयांचकार, चोरयांचकर । चोरयांचकृव । चोरयांचकृम । इत्यादि । छादयांचक्रे । छादयांचकृवहे । छादयांचकृमहे । इत्यादि । लक्षयांचकार । लक्षयांचकर । लक्षयांचकृव । लक्षयांचकृम । इत्यादि । लक्षयांचक्रे । लक्षयांचकृवहे । लक्षयांचकृमहे । इत्यादि । योजयांचकार । योजयांचकर । युयोज । अर्चयांचकर । अर्चयांचकार । आनर्च । वारयांचकार । ववार । वव्रे । इत्यादि संप्रपंचं सर्वमवगंतव्यं ॥ लुङ् प्रदर्श्यते । "भूते,, इत्यनुवर्तमाने—

१९८ ॥ लुङ् । २ । २ । ११७ । भूतेऽर्थे वर्तमानाद्धोर्लुङ् स्यो भवति । ङकारो ङितः सखमिति विशेषणार्थः । उकारो लुङ्ङकिति विशेषणार्थः । स्यतासी लृलुटोरिति लोस्तासिः प्राप्तस्तदपवादः ।

१९९ ॥ सिलुङि । ३ । १ । ५२ । धोर्लुङि परतो मध्ये

सिस्त्यो भवति । इकारः "सार्वैम्मे" इति विशेषणार्थः । "यङ उप्" इत्यधिकृत्य—

८०० ॥ **भुभूस्थेणिक्पिबः सेर्म्मे** । १ । ४ । १४९ । भुसंज्ञकेभ्यो भू स्था इण् इक् पिब इत्येतेभ्यश्च परस्य सेरुब्भवति मे परतः। इति सेरुप्। त्यखे त्याश्रयन्यायेन सार्वैप् प्राप्तः, "नोमता गोः" इति निषिद्धः। " लुङ्लङ्लृङ्क्ष्वमाङ्गाद् " इत्यट् । पूर्ववन्मिबादिः। " एर्मे " इत्यादि च ङिल्लकारकार्यं। पित्त्वेप् प्राप्तः। "नेटः" इति वर्तमाने—

८०१ ॥ **सूभ्वोऽथस्य मिङि** । ५ । २ । ९६ । सू भू इत्येतयोरथसंज्ञकयोर्मिङि पित्यैप् न भवति।"लुङ्लिटोर्वुक्" इत्यजादौ वुक्। अभूवं। अभूव। अभूम। अभूः। अभूतं। अभूत। अभूत्। अभूतां। अभूवन्। दविधौ—सेरुप् न भवति। तत्र सेरिट्। एबवादेशौ। "झस्य देऽनतः" इत्यदादेशः। व्यत्यभविषि। व्यत्यभविष्वहि। व्यत्यभविष्महि। व्यत्यभविष्ठाः। व्यत्यभविषाथां। व्यत्यभविध्वं। व्यत्यभविढ्वं। व्यत्यभविष्ट। व्यत्यभविषातां। व्यत्यभविषत। "स्फांतस्य खं" इति "रात्सः" इति च वर्तमाने—

८०२ ॥ **धि वा** । ५ । ३ । ६१ । धकारादौ परतो वा सकारस्य खं भवति। पक्षे जश्त्वे डकारः। ऐधिषि। ऐधिष्वहि। ऐधिष्महि। ऐधिष्ठाः। ऐधिषाथां। ऐधिध्वं। ऐधिड्ढ्वं। ऐधिष्ट। ऐधिषातां। ऐधिषत॥ "सार्वैम्मे" इति वर्तमाने-

८०३ ॥ **हलामचः** । ५ । १ । ८८ । हलंतस्य गोरचः ऐप् भवति मपरे सौ परतः। इत्यैप्। "ब्रुव ईट्" इति वर्तमाने—

८०४ ॥ **हल्यस्सेः** । ५ । २ । १०३ । अस्तेस्सेश्च गुनिमित्तात् ईडागमो भवति हलि केवले परतः। इति ईट्।

८०५ ॥ **झलो झलि** । ५ । ३ । ६२ । झलः परस्य सकारस्य खं भवति झलि परतः । इति सखं । "थविस्सेः" इति झेर्जुस् । अपाक्षं । अपाक्ष्व । अपाक्ष्म । अपाक्षीः । अपाक्तं । अपाक्त । अपाक्षीत् । अपाक्तां । अपाक्षुः । अपाक्षि । अपक्ष्वहि । अपक्ष्महि । अपक्थां । अपक्षाथां । अपग्ध्वं । अपक्त । अपक्षातां । अपक्षत ।

८०६ ॥ **नेटि** । ५ । १ । ८९ । हलंतस्य गोरचः ऐप् न भवति मे परे सात्विडादौ परतः । "रः खं" इति वर्तमाने—

८०७ ॥ **ईटीटः** । ४ । ४ । १९ । इटः परस्य सेरीडादौ त्ये परतः खं भवति । स्वको दीः । अनंदिषं । अनंदिष्व । अनंदिष्म । अनंदीः । इत्यादि । अध्वंसिषि । अध्वंसिष्वहि । अध्वंसिष्महि । इत्यादि । "सौ, मे" इति च वर्तमाने–

८०८ ॥ **यमूरमूनमातां सक् च** । ५ । १ । १४६ । यम् रम् नम् इत्येतेभ्यः आकारांतेभ्यश्च मपरे सौ परतः इट् भवति सक् चागमं एषां । अव्यासिषं । अव्यासिष्व । अव्यासिष्म । अव्यासीः । इत्यादि । अव्यासि । अव्यास्वहि । अव्यास्महि । इत्यादि । "सावेम्मे" इत्यादि पूर्ववत । अहौषं । अहौष्व । अहौष्म । अहौषीरित्यादि । व्यत्यहोषि । व्यत्यहोष्वहि । व्यत्यहोष्महि । व्यत्यहोष्ठाः । व्यत्यहोषाथां । व्यत्यहोध्वं । धि वेति यदा सेर्न खं, तदा त्यादशयोरिति षत्वं । जश्त्वे डकारः । ष्टुत्वे च परस्य ढकारः । व्यत्यहोड्ढ्वं । व्यत्यहोष्ट । व्यत्यहोषातां । व्यत्यहोषत । अहासि । अहास्वहि । अहास्महि । इत्यादि । भुभूस्थेत्यादिना सेरुप् ।

८०९ ॥ **आतः** । २ । ४ । ९२ । आकारांतात् यः सिः तस्मात् परस्य झेर्जुस् भवति । अधां । अधाव । अधाम । अधुः । इत्यादि । "यमस्सौ सिलौ दे" इति वर्तमाने–

८१० ॥ भुस्थोरिः । १ । १ । १९६ । भुसंज्ञकस्य स्था इत्येतस्य च धोः सकारादौ दपरे साविकारादेशो भवति किद्वच । झलि—

८११ ॥ माद्गोः । ५ । ३ । ६३ । मांतात् गोरुत्तरस्य सकारस्य खं भवति झलि । इति खं । अधिषि । अधिष्वहि । अधिष्महि । अधिथाः । अधिषाथां । अधिध्वं । अधित । अधिषातां । अधिषत ।

८१२ ॥ घस्लजलुङ्घञ्सनि । १ । ४ । १२९ । अदेर्घस्लृ इत्ययमादेशो भवति अचि लुङि घञि सनि च परतः । लृकारो लित्कार्यार्थः । "वक्त्यसुख्यातेरङ्" इत्यधिकृत्य—

८१३ ॥ द्युत्पुष्यादिलित्सर्तिशास्तर्मे । २ । १ । ६१ । द्युतादिभ्यः पुषादिभ्यश्च लृकारेद्भ्यः सर्तिशास्तिभ्यां च कर्तरि मपरे लुङि परतो अङ् भवति । ङकारो ङित्कार्यार्थः । अघसं । अघसाव । अघसाम । इत्यादि । दविधौ-सिरेव । "मरुद्देऽस्तोऽचः" इति वर्तमाने—

८१४ ॥ स्यगे सः । ५ । २ । १६४ । सकारादावगे परतो गोरचः परस्य सकारस्य तकारादेशो भवति । इति तकारः । झलि-सेःखं । व्यत्यघत्सि । व्यत्यघत्स्वहि । व्यत्यघत्स्महि । व्यत्यघत्थाः । इत्यादि । अशायिषि । अशायिष्वहि । अशायिष्महि । इत्यादि ।

८१५ ॥ वक्त्यसुख्यातेरङ् । २ । १ । ५८ । वक्ति-वचै परिभाषणे ब्रूञादेशश्च, असु क्षेपणे, ख्या-प्रकथने चक्षादेशश्च । एतेभ्यो धुभ्यः कर्तरि लुङि परतोऽङ् भवति । इत्यङ् । "नशोऽङीम्" इति वर्तमाने—

८१६ ॥ श्व्यस्पत्वचोऽथुक्पुमुम् । ५ । २ । १४२ । श्वि अस् पत् वच् इत्येतेषां यथासंख्यमकार थुक् पुम् उम् इत्येते

आगमा भवति अङि परतः । इति वचेरुमागमः । अवोचं । अवोचाव । अवोचाम । इत्यादि । अवोचे । अवोचावहि । अवोचामहि । इत्यादि । सेरिट् । सिप्पिपोरीट् । "इटीटः" इति सखं । त्यखे त्याश्रयमिति "हलामचः" इति एपि प्राप्ते नेटीति निषिद्धः । 'घ्युङः' इत्येप् । अदेविषं । अदेविष्व । अदेविष्म । अदेवीरित्यादि । व्यत्यदेविषि । व्यत्यदेविष्वहि । व्यत्यदेविष्महि । इत्यादि । असविषि । असविष्वहि । असविष्महि असोषि । असोष्वहि । असोष्महि । इत्यादि । अनात्सं । अनात्स्व । अनात्स्म । अनात्सीरित्यादि । अनत्सि । अनत्स्वहि । अनत्स्महि । इत्यादि । "सावजेः" इत्यधिकृत्य—

८१७ ॥ स्तुधूञ्सोर्मे । ५ । १ । १४६ । स्तु धूञ् सुञ् इत्येतेभ्यो मे परे साविट् भवति । असाविषं । असाविष्व । असाविष्म । असावीरित्यादि । असोषि । असोष्वहि । असोष्महि । इत्यादि । आशिषि । आशिष्वहि । आशिष्महि । आशिष्ठाः । इत्यादि । अनिट्पक्षे व्रश्चेत्यादिना षत्वं । षढोः कस्सीति कत्वं । टुत्वादि च । आक्षि । आक्ष्वहि । आक्ष्महि । आष्ठाः । आक्षाथां । आढ्वं । आष्ट । आक्षातां । आक्षत । निरचैषं । निरचैष्व । निरचैष्म । निरचैषीरित्यादि । समचेषि । समचेष्वहि । समचेष्महि । इत्यादि । "हलामचः" इत्यैप् । सिप्तिपोरीट् । झलि सेःखं । अतौत्सं । अतौत्स्व । अतौत्स्म । अतौत्सीः । अतौत्तं । अतौत्त । अतौत्सीत् । अतौत्तां । अतौत्सुः । "सिलौ दे" इति सेः किद्वद्भावात् "घ्युङः" इत्येप् न भवति । झलि सेः खं । धि वेत्यखपक्षे झलो जश् झशीति सेर्जश्त्वं । तस्य "झरो झरि स्वे" इति खं । अतुत्सि । अतुत्स्वहि । अतुत्स्महि । अतुत्थाः । अतुत्साथां । अतुद्ध्वं । अतुत्त । अतुत्सातां । अतुत्सत । अमृषि । अमृष्वहि । अमृष्महि । अमृधाः । इत्यादि । द्युत्पुष्यादीत्यादिना अङ् । अमुचं ।

अमुचाव । अमुचाम । इत्यादि । अमुक्षि । अमुक्ष्वहि । अमुक्ष्महि। इत्यादि ।

८१८ ॥ वेरितः । २ । १ । ६२। इर्शब्देतो धोर्लुङि मे परतो वा अङ् भवति कर्तरि। पक्षे सिः । दे तु सिरेव। किद्वद्भावादनेप्च। अरुधं । अरुधाव । अरुधाम । इत्यादि । अरौत्सं । अरौत्स्व । अरौत्स्म । अरौत्सीः । अरौद्धं । इत्यादि । अरुत्सि । अरुत्स्वहि । अरुत्स्महि । अरुद्धाः । अरुत्साथां । अरुद्धं । अरुत्त । अरुत्सातां । अरुत्सत। अभुक्षि । अभुक्ष्वहि । अभुक्ष्महि । इत्यादि । अयुजं । अयुजाव । अयुजाम । इत्यादि । अयौक्षं । अयौक्ष्व । अयौक्ष्म । अयौक्षीः । अयौक्तं । अयौक्त । इत्यादि । प्रायुक्षि । प्रायुक्ष्वहि । प्रायुक्ष्महि । प्रायुक्थाः । इत्यादि । "वोर्णुञः,, इति वर्तमाने—

८१९ ॥ अतोऽनादेर्घेः । ५ । १ । ८२ । घेः परतोऽनादेरिडादौ मपरे सात्रैप् वा भवति । इत्यैप् । अतानिषं । अतानिष्व । अतानिष्म । अतानीरित्यादि । पक्षे-अतनिषं । अतनिष्व । अतनिष्म । इत्यादि । दविधौ-थास्तयोः— उब्रिति सेरिति वेति च वर्तमाने—

८२० ॥ तन्भ्यस्थास्ते । १ । ४ । १५१ । तनादिभ्यः परस्य सेरुब्वा भवति थास्तयोः परतः। इत्युपि—क्ङितीति वर्तमाने-

८२१ ॥ हन्‌मन्यम्रम्नम्गम्वनतितनां ङ्खं झलि । ४ । ४ । ३९ । हनादीनां वनतेस्तनादीनां च गूनां झलादौ किङति ल्ये परे ङखं भवति। इति नकारस्य खं । अतनिषि । अतनिष्वहि । अतनिष्महि । अतथाः । अतनिष्ठाः । अतनिषातां । अतनिध्वं । अतनिढ्वं । अतत । अतनिष्ट । अतनिषातां । अतनिषत । पूर्ववद् सेरुब्वादि । अमनिषि । अमनिष्वहि । अमनिष्महि ।

इत्यादि । अकार्षं । अकार्ष्व । अकार्ष्म । अकार्षीः । इत्यादि । अकृषि । अकृष्वहि, अकृष्महि । अकृथाः । इत्यादि । अक्रैषं । अक्रैष्व । अक्रैष्म । अक्रैषीः । इत्यादि । अक्रीषि । अक्रीष्वहि । अक्रीष्महि । अक्रीष्ठाः । इत्यादि । "वृतो वा,, इति वर्तमाने ।

८२२ ॥ लिङ्स्योर्दे । ५ । १ । ९८ । वृङ् वृञ् इत्येताभ्यां ऋकारांताच्च परौ यौ लिङ्सी तयोर्दविषययोरिड् वा भवति । यदेट्--तदा ।

८२३ ॥ वृतो वाऽलिमसौ । ५ । १ । ९९ । वृतः परस्य इटो वा दीर्भवति न चेत्स इट् लौ लिङि लिटि मपरे सौ च भवति । इति दीत्वं । अवरीषि । अवरीष्वहि । अवरीष्महि । इत्यादि । इडभावे—सिलौ दे,, उरिति किद्वद्भावादेप् न भवति । अवृषि । अवृष्वहि । अवृष्महि । इत्यादि । ग्रहोऽलिटयेकाचो दीरिति दीत्वं ।

८२४ ॥ ह्म्यक्षण्श्वस्श्व्येदितां । ५ । १ । ९० । हमयांतानां क्षण् शश् श्वि इत्येषां एदितां च गूनामिडादौ साविप् न भवति । इत्येबभावः । अगृहीषं । अगृहीष्व । अगृहीष्म । इत्यादि । अगृहीषि । अगृहीष्वहि । अगृहीष्महि । इत्यादि ।

८२५ ॥ णिकम्श्रिद्रुश्रः कर्त्तरि कच् । २ । १ । ५६ । ण्यंतेभ्यो धुभ्यः कम् श्रि द्रु श्रु इत्येतेभ्यश्च कर्तृवाचिनि लुङि परतः कच् भवति । सेरपवादः । ककारः कित्कार्यार्थः । चकारो "लिङ्च्काचि धोः" इति विशेषणार्थः ।

८२६ ॥ णौ कच्युङः प्रोऽशास्वक्ख्यृदितः । ५ । २ । १२८ । शासु अक्खिन् ऋदित् इत्येतत्वर्जितस्य गोरुङः प्रादेशो भवति कच्परे णौ परतः ।

८२७ ॥ द्वित्वेऽचि । १ । १ । ६८ । द्वित्वनिमित्तेऽचि अजादेशो स्थानिवद्भवति । स्थानिवद्भावेन "लिड्च्कचि घोः" इति द्वित्वं । हलोऽनादेरित्यादि च कार्यं ।

८२८ ॥ घेर्दीरनजादेः । ५ । २ । २१२ । णौ कच्परे ऽनक्खे णावनजादेर्गोश्चस्य घेर्दीर्भवति । णिखमङ् च। अचूचुरं। अचूचुराव । अचूचुराम । अचूचुरः । अचूचुरतं । अचूचुरत । अचूचुरत् । अचूचुरतां । अचूचुरन् ।

८२९ ॥ णौ कच्यनक्खे सन्वत् । ५ । २ । २११ । न विद्यतेऽकः खं यस्मिन् तदनक्खं तस्मिन्ननक्खे णौ कच्परे परतश्चस्य घिसंज्ञके वर्णे परे सनीव कार्यं भवति। किं तत् । चस्यति "भृहाङ्-मामिः,, इति च वर्तमाने—

८३० ॥ सन्यतः । ५ । २ । २०० । सनि परतश्चस्याकारस्य इत्वं भवति । इतीत्वं । घेर्दीरनजादेरिति दीत्वादंतरंगत्वेन "छे च" इति तुक् । पुनः घित्वाभावान्न दीत्वं । अचिच्छदं । अचिच्छदावहि। अचिच्छदामहि । इत्यादि । अललक्षं । अललक्षाव। अललक्षाम । इत्यादि । अललक्षि । अललक्षावहि । अललक्षामहि । इत्यादि । अयूयुजं । अयूयुजाव । अयूयुजाम । इत्यादि । अयौक्षं। अयौक्ष्व इत्यादि । "आदेरेकाचो द्वे" इति वर्तमाने—

८३१ ॥ अचः ।४ । ३ । ३। आदेरचः परस्य एकाचो द्वे रूपे भवतः । आदिद्वित्वापवादः ।

८३२ ॥ न स्फादौ न्द्रोऽयि ।४। ३ । ४ । आदेरचः परे स्फादौ वर्तमाना नकारदकाररेफवकारा न द्विरुच्यंतेऽयकारे । आर्चिचं। आर्चिचाव । इत्यादि। आर्चिचिषि । आर्चिच्वहि । इत्यादि । अवीवरं। अवीवराव । इत्यादि । प्रावारिषं । प्रावारिष्व । इत्यादि ।

प्रावरिषि । प्रावरीषि । प्रावृषि । प्रावृष्महि । इत्यादि सविस्तरमभ्यूह्यं । लुङुदाह्रियते । "गम्यादिर्वर्त्स्यति,, इत्यधिकृत्य—

८३३ ॥ **शोकानद्यतने लुट्** । २ । ३ । ३ । वर्त्स्यत्यर्थे वर्तमानाद्धोर्लुट् भवति लृटोऽपवादः शोकानद्यतने ॥ शोकोऽनुशोचनं पश्चात्ताप इत्यर्थः । टकारः पूर्ववत् । उकारः "स्यतासी लृ-ल्वोः,, इति विशेषणार्थः ।

८३४ ॥ **स्यतासी लृल्वोः** ।२।१।४९। लृ इति लृटि लृङि लौ लुटि परतो मध्ये तासिस्यौ भवति । इकारो "हलुङः क्ङित्यनदितः, इति विशेषणार्थः । तस्य "वलादेरिट्" इति इट् । ततो मिबादयः ।

८३५ ॥ **लुटोऽन्यस्य डारौरस्** ।२ । ४ । ९७। लुडादेशानामन्यसंज्ञकानां तिप् तस् झि इत्येतेषां यथासंख्यं डा रौ रस् इत्येते आदेशा भवंति । "तास्थानेऽतेऽलः,, इति तिप इकारस्य डादेशः। डिति टेरिति आस्तशब्दरूपस्य खं । "स्यगे सः" इति वर्तमाने—

८३६ ॥ **तासस्त्योः खं** ।५ । २ । १६९। तासेरस्तेश्च सकारस्य खं भवति सकारादौ स्ये ।

८३७ ॥ **रि** । ५ । २ । १७० । तासेरस्तेश्च धोःरेफादौ सकारस्य खं भवति । एवावादेशौ । भवितास्मि । भवितास्व । भवितास्म । भवितासि । भवितास्थः । भवितास्थ । भविता । भवितारौ । भवितारः ।

८३८ ॥ **एसि हः** ।५ । २ । १७१। तासेरस्तेश्च सकारस्य हकारादेशो भवति एकारादौ स्ये परतः । व्यतिभविताहे । व्यतिभवितास्वहे । व्यतिभवितास्महे । व्यतिभवितासे । व्यतिभवितासाथे । व्यतिभविताध्वे । व्यतिभविता । व्यतिभवितारौ । व्यतिभवितारः । एधिताहे । एधितास्वहे । एधितास्महे । एधितासे । इत्यादि ।

पक्तास्मि । पक्ताहे । सुनंदितास्मि । प्रध्वंसिताहे । सन्यातास्मि । संव्याताहे । होतास्मि । व्यतिहोताहे । हाताहे । प्रणिपूर्वाद्धात्रः—

**८३९ ॥ नेर्गदनदपतपदघुमास्यतिहंतियातिवातिद्रातिप्सातिवपतिवहतिशमुचिञ्देग्धौ । ५ । ४ । १२० ।**
गेरदुरोऽन्तःशब्दाच्च परस्य नेर्गदादिषु परतो णत्वं भवति । इति णत्वं । प्रणिधातास्मि । प्रणिधाताहे । अत्तास्मि । व्यत्ताहे । आतिशयिताहे । वक्ताहे । वक्तास्मि । देवितास्मि । व्यतिदेविताहे । सविताहे । सोताहे । "ग्यंतरोऽदुरोऽविकृतः" इति णत्वं । परिणद्धास्मि । परिणद्धाहे । अभिषोतास्मि । अभिषोताहे । अशिताहे । अष्टाहे । चेतास्मि । चेताहे । तोत्तास्मि । तोत्ताहे । मर्त्तास्मि । व्यतिमर्त्ताहे । मोक्तास्मि । मोक्ताहे । रोद्धास्मि । रोद्धाहे । भोक्ताहे । भोक्तास्मि । प्रयोक्ताहे । तनितास्मि । तनिताहे । कर्त्तास्मि । कर्त्ताहे । क्रीतास्मि । क्रीताहे । वरितास्मि । वरिताहे । गृहीतास्मि । गृहीताहे । चोरयितास्मि । छादयिताहे । लक्षयितास्मि । लक्षयिताहे । योजयितास्मि । योक्तास्मि । अर्चयितास्मि । अर्चयिताहे । वारयितास्मि । वारयिताहे । वरितास्मि । वरिताहे । इत्यादि सर्वमुन्नेयं ॥ लृट् व्याख्यायते । गम्यादिर्भविष्यतीत्यधिकृत्य—

**८४० ॥ लृट् । २ । ३ । २ ।** वस्त्यर्थे वर्तमानाद्धोर्लृट् भवति । टकारः पूर्ववत् । ऋकारः स्यतासी लृल्वोरिति विशेषणार्थः । तेनैव मध्ये स्येति विकरणः । इडबवादेशास्ततो मिबादयः । भविष्यामि । भविष्यावः । भविष्यामः । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यति । भविष्यतः । भविष्यंति । व्यतिभविष्ये । व्यतिभविष्यावहे । व्यतिभविष्यामहे । व्यतिभविष्यसे । व्यतिभविष्येथे । व्यतिभविष्यध्वे । व्यतिभविष्यते । व्यतिभविष्येते । व्यतिभविष्यंते । एधिष्ये ।

पक्ष्यामि । पक्ष्ये । नंदिष्यामि । ध्वंसिष्ये । व्यास्यामि । व्यास्ये । होष्यामि । व्यतिहोष्ये । हास्ये । श्रद्धास्यामि । श्रद्धास्ये । अत्स्यामि । व्यत्यत्स्ये । शयिष्ये । वक्ष्यामि । वक्ष्ये । देविष्यामि । व्यतिदेविष्ये । प्रसविष्ये । प्रसोष्ये । नत्स्यामि । नत्स्ये । अभिषोष्यामि । अभिषोष्ये । अशिष्ये । अक्ष्ये । निश्वेष्यामि । निश्वेष्ये । तोत्स्यामि । तोत्स्ये ।

**८४१ ऋद्धन इट् स्ये । ५ । १ । १४४ ।** ऋकारांताद्धोर्हन्तेश्चागे स्ये इट् भवति । मरिष्यामि । व्यतिमरिष्ये । मोक्ष्यामि । मोक्ष्ये । रोत्स्यामि । रोत्स्ये । भोक्ष्ये । योक्ष्यामि । योक्ष्ये । तनिष्यामि । तनिष्ये । करिष्यामि । करिष्ये । क्रीष्यामि । क्रीष्ये । वरिष्ये । वरीष्ये । ग्रहिष्यामि । ग्रहीष्ये । चोरयिष्यामि । छादयिष्ये । लक्षयिष्ये । योजयिष्यामि । योक्ष्यामि । अर्चयिष्यामि । अर्चिष्ये । वारयिष्यामि । वरिष्यामि । वरीष्यामि । वरिष्ये । इत्यादि सप्रपंचमधिगंतव्यं ॥ लृङुदाह्रियते । गम्यादिर्वर्त्स्यतीत्याधिकृत्य—

**८४२ ॥ लिङ्हेतौ लृङ् क्रियाऽवृत्तौ । २ । ३ । १३० ।** हेतुस्तत्फलप्रभृतिर्लिङ्गो हेतुर्वक्ष्यते । तत्र लिङ्गो हेतौ वर्त्स्यति काले लृङ् भवति क्रियायाश्चेदवृत्तिरातिपत्तिर्भवति ।

**८४३ ॥ भूते । २ । ३ । १३१ ।** भूते काले लिङ्हेतौ क्रियावृत्तौ लृङ् भवति । टकारः पूर्ववत् । ऋकारः स्यतासी लृल्वोरिति सामान्यग्रहणार्थः । मध्ये स्यः । इडेबवादेशाः । अडागमः । अभविष्यं । अभविष्याव । अभविष्याम । अभविष्यः । अभविष्यतं । अभविष्यत । अभविष्यत् । अभविष्यतां । अभविष्यन् । दाविधौ-व्यत्यभविष्ये । व्यत्यभविष्यावहि । व्यत्यभविष्यामहि । व्यत्यभविष्यथाः । व्यतिभविष्येथां । व्यत्यभविष्यध्वं । व्यत्यभविष्यत । व्यत्यभविष्येतां । व्यत्यभविष्यंत । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि । सर्वमभ्यूह्यं ।

इति कर्तृपरिच्छेदः ।

अथ भावकर्मकर्मकर्तृषु लिङादयो निर्दिश्यंते ।

**८४४ ॥ सिस्यसीयुट्तासां ञौ गृहाञ्झनदृशो ञीट्** । ४ । ४ । ६५ । ग्रहेरजंतभ्यो हनृदृशिभ्यां च परेषां सि स्य सीयुट् तास् इत्येतेषां ञावर्थे विहितानां ञीडागमो भवति वा । पक्षे-इट् । ञीटि--ञ्णित्यचः,, इत्यैप् । तत्र-भावे--भाविषीष्ट, भविषीष्ट देवदत्तेन । कर्मणि-अनुभाविषीय । अनुभविषीयेत्यादि । कर्मकर्तरि-अनुभाविषीय स्वयमेव । अनुभविषीय इत्यादि । सर्वं कर्तृवन्नेयं । एधिषीष्ट । पक्षीष्ट । नंदिषीष्ट । ध्वंसिषीष्ट । "ञौ" इति "आतः" इति चानुवर्तमाने—

**८४५ ॥ कृञ्ञौ युक्** । ५ । २ । १७ । गोराकारांतस्य युगागमो भवति कृति ञ्णिति ञीटि च परतः । संव्यायिषीष्ट । संव्यासीष्ट । हाविषीष्ट । होषीष्ट । हायिषीष्ट । हासीष्ट । धायिषीष्ट । धासीष्ट । अत्सीष्ट । शायिषीष्ट । शयिषीष्ट । वक्षीष्ट । निश्रायिषीष्ट । निश्रिषीष्ट । तुत्सीष्ट । मारिषीष्ट । मृषीष्ट । मुक्षीष्ट । रुत्सीष्ट । भुक्षीष्ट । युक्षीष्ट । तनिषीष्ट । मनिषीष्ट । कारिषीष्ट । कृषीष्ट । क्रायिषीष्ट । क्रीषीष्ट । वारिषीष्ट । वरिषीष्ट । वृषीष्ट । ग्राहिषीष्ट । ग्रहिषीष्ट । चोरयिषीष्ट । चोरिषीष्ट । छादयिषीष्ट । छादिषीष्ट । लक्षयिषीष्ट । लक्षिषीष्ट । योजिषीष्ट । योजयिषीष्ट । युक्षीष्ट । अर्चिषीष्ट । अर्चयिषीष्ट । वारिषीष्ट । वारयिषीष्ट । वरिषीष्ट । वृषीष्ट । इत्यादि । सर्वं प्रत्येयं । लिटि—भावे—बभूवे देवदत्तेन । कर्मणि-कर्मकर्तरि च-अनुबभूविवहे । इत्यादि । एधांचक्रे । पेचे । ननंदे । दध्वंसे । संविव्ये । जुहवांचक्रे । जुहुवे । जहे । विदधे । आदे । जक्षे । शिश्ये । ऊचे । दिदिवे । प्रसुषुवे । नेहे । अभिषुषुवे । आनशे । चिक्ये । चिच्ये । तुतुदे । मम्रे । मुमुचे । रुरुधे । बुभुजे । युयुजे ।

तेने । मेने । चक्रे । चिकीर्ये । वव्रे । जग्रहे । चोरयांचक्रे । छादयांचक्रे । लक्षयांचक्रे । योजयांचक्रे । युयुजे । अर्चयांचक्रे । आनर्चे । वारयांचक्रे । वव्रे । इत्यादि पूर्ववज्ज्ञेयं ॥ लुङि-भावे-कर्मणि तवचनं । "लुङि" इति "त ञिः" इति च वर्तमाने –

८४६ ॥ कौ । २ । १ । ६८ । ङावर्थे भावकर्मणि लुङि तवचने परे धोर्ञिस्यो भवति । सेरपवादः । ञकार ऐवर्थः ।

८४७ ॥ ञेरुप् । १ । ४ । १०१ । ञेरुत्तरस्य गोनिर्मिसभूतस्य उप् भवति । अभावि देवदत्तेन । अन्वभावि कम्बलो देवदत्तेन । कर्मकर्त्तरि–

८४८ ॥ कर्मवल्लेऽस्त्वादीनां । २ । १ । ७६ । स्नवस्यादिवर्जितस्य धोः कर्मकर्त्तरि विहिते लकारे कर्मवत् कार्यं भवति । व्यतिदेशान्नित्यं ञौ प्राप्ते–

८४९ ॥ कर्मणि २ । १ । ६६ । कर्तरीति वर्तते । कर्तृत्वेन विवक्षिते कर्मणि लुङि ते परतो ञिर्वा भवति । पक्षे सिः । यदा सिस्तदा ञीट् । अन्वभावि कंबलः स्वयमेव । अन्वभाविष्ट । अन्वभविष्ट । इति त्रैरूप्यं । अन्यत्र ञीट्तदभावाद् द्वैरूप्यं । अन्वभाविषि । अन्वभविषि । अन्वभविष्वहि । अन्वभविष्महि । इत्यादि । "दुहश्च" इति हलंतनियमादन्येषां ञिविकल्पो न भवति । ऐधि । अपाचि । अपक्षातां । अनंदि । प्रानंदिषातां । अध्वंसि । अध्वंसिषातां । अव्यायि । अव्यायिष्ट । अव्यास्त । अव्यायिषातां । अहोषि । अहासातां । अधायि । अधायिष्ट । अधित । अधायिषातां । अधिषातां । अघत्सातां । अशायि । अवाचि । अवक्षातां । अदेवि । अदेविषातां । असावि । असाविष्ट । असविष्ट । असोष्ट । असाविषातां । असविषातां । असोषातां । अनाहि । अनत्सातां । असावि । असा-

विष्ट । असोष्ट । असाविषातां । असोषातां । आशि । आशिषातां । आक्षातां । निरचायि । निरचायिष्ट । निरचिष्ट । निरचायिषातां । निरचिषातां । अतोदि । अतुद्ध । अतुत्सातां । अमारि । अमोचि । अमुक्षातां । ञिरिति वर्तमाने–

८५० ॥ **न रुधः । २ । १ । ८ ।** रुधेर्धो: कर्मकर्तरि ञि-र्न भवति । ञाविति नित्यं प्राप्तः । कर्मणि तु भवत्येव । अरोधि । कर्मकर्तरि–अरुद्ध । अरुत्सातां । अभोजि । अभुक्षातां । अयोजि । अयुक्षातां । अतानि । अतानिषातां । अमानि । अमानिषातां । अकारि । अकारिष्ट । अकृत । अकारिषातां । अकृषातां । अकारि-षत । अकृषत । अक्रायि । अक्रायिष्ट । अक्रीष्ट । अक्रायिषातां । अक्रीषातां । अवारि । अवारिष्ट । अवरिष्ट । अवरीष्ट । अवृत । अवा-रिषातां । आवारीषातां । अवरिषातां । अवरीषातां । अवृषातां । अग्रा-हि । अग्राहिषातां । अग्रहीषातां । "यग्दुहः" इति " नमः " इति चाधिकृत्य–

८५१ ॥ **दधिणिश्रिश्रंथिग्रंथिवचूश्नोश्च ञिश्च । २ । १ । ७३** दे धींनां ण्यंतानां श्रि श्रंथि ग्रंथि वच श्नु इत्येतेषां नमेश्च कर्मकर्तरि ञियक् च न भवतः । इति कर्मकर्तरि ञिप्रतिषेधः । अचूचुरत स्वयमेव । कर्मणि-अचोरि । अचोरिषातां । अचोरयिषातां । अचिच्छदत स्वयमेव । कर्मणि-अच्छादि । अच्छादिषातां । अच्छा-दयिषातां । अलक्षत स्वयमेव । कर्मणि-अलक्षि । अलक्षिषातां । अयूयुजत स्वयमेव । कर्मणि-अयोजि । अयोजिषातां । अयोजयिषातां । अयुक्षातां । आर्चिचत स्वयमेव । कर्मणि–आर्चि । आर्चिषातां । आ-र्चयिषातां । अवीवरत स्वयमेव । कर्मणि-अवारि । अवारिष्ट । अवृत । अवारिषातां । अवारयिषातां । अवृषातामित्यादि सर्वमधि-

गंतव्यं । लुटि तासौ चीटि च विकल्पः । अन्यत्रेट् । भाविता । अनुभाविताहे । अनुभविताहे । एधिता । पक्ता । पक्ताहे । नंदिता । अभिनंदिताहे । ध्वंसिता । ध्वंसिताहे । संव्यायिता । संव्याता । संव्यायिताहे । संव्याताहे । हाविता । होता । हाविताहे । होताहे । हायिता । हाता । हायिताहे । हाताहे । परिधायिता । परिधाता । परिधायिताहे । परिधाताहे । अत्ता । अत्ताहे । शायिता । शयिता । अतिशायिताहे । अतिशयिताहे । वक्ता । वक्ताहे । देविता । देविताहे । साविता । सविता । सोता । साविताहे । सविताहे । सोताहे । परिणद्धा । परिणद्धाहे । साविता । सोता । साविताहे । सोताहे । अशिता । अष्टा । अशिताहे । अष्टाहे । चायिता, चेता । चायिताहे । चेताहे । तोत्ता । तोत्ताहे । मारिता । मर्ता । परिमारिताहे । परिमरिताहे । मोक्ता । मोक्ताहे । रोद्धा । रोद्धाहे । भोक्ता । भोक्ताहे । योक्ता । योक्ताहे । तनिता । तनिताहे । मनिता । मनिताहे । कारिता । कर्ता । कारिताहे । कर्ताहे । क्रायिता । क्रीता । क्रायिताहे । क्रीताहे । वारिता । वरिता । वरीता । वारिताहे । वरिताहे । वरीताहे । ग्राहिता । ग्रहिता । ग्राहिताहे । ग्रहिताहे । चोरिता । चोरयिता । चोरिताहे । चोरयिताहे । छादिता । छादयिता । छादिताहे । छादयिताहे । लक्षिता । लक्षयिता । लक्षिताहे । लक्षयिताहे । योजिता । योजयिता । योक्ता । योजिताहे । योजयिताहे । योक्ताहे । अर्चिता । अर्चयिता । वारयिता । वरिता । वरीता । इत्यादि सर्वमभिलक्ष्यं । लृटि-चीटि तदभावेन च द्विधा नीतिः । भाविष्यते देवदत्तेन । कर्मणि-कर्मकर्तरि च-अनुभाविष्यते । अनुभविष्यते । एधिष्यते । पक्ष्यते । नंदिष्यते । ध्वंसिष्यते । व्यायिष्यते । व्यास्यते । हाविष्यते । होष्यते । हायिष्यते । हास्यते । विधायिष्यते । विधा-

स्यते । अत्स्यते । अतिशायिष्यते । अतिशयिष्यते । वक्ष्यते । देवि-ष्यते । साविष्यते । सविष्यते । सोष्यते । नत्स्यते । अभिपाविष्यते । अभिपोस्यते । अशिष्यते । अक्ष्यते । निश्वायिष्यते । निश्वष्यते । तोत्स्यते । मारिष्यते । मरिष्यते । मोक्ष्यते । रोत्स्यते । भोक्ष्यते । योक्ष्यते । तानिष्यते । मानिष्यते । कारिष्यते । करिष्यते । क्रायि-ष्यते । क्रीष्यते । वारिष्यते । वरिष्यते । ग्राहिष्यते । ग्राहिष्यते । छादिष्यते । छादयिष्यते । लक्षयिष्यते । लक्षिष्यते । योजयिष्यते । योजिष्यते । योक्ष्यते । अर्चिष्यते । अर्चयिष्यते । वारिष्यते । वारयिष्यते । वरीष्यते । वरिष्यते । इत्यादि सर्वमुन्नेयं ॥ अथ लृङि ञीटिड्भ्यां द्विधा नीतिः । अभाविष्यत, अभविष्यत देवदत्तेन । कर्मणि-कर्मकर्तरि च-अन्वभाविष्यत । अन्वभविष्यत । ऐधिष्यत । अपक्ष्यत । अनंदिष्यत । अध्वंसिष्यत । अध्यायिष्यत । अध्यास्यत । अहाविष्यत । अहोष्यत । इत्यादि सविस्तरमूहितव्यं । एवं परमप्र-कृतेनेव लकारा उदाहृताः ॥

अथ त्यांतेषु सन्नंताः

भवितुमिच्छतीति विगृह्य " किद्गुप्तिजः सन् भिषज्यादीनि-दाक्षमे" इति वर्तमाने—

**८५२ ॥ तुमीच्छायां धोर्वोप् । २ । १ । ५ ।** "इच्छार्थे लिङ्लोड्" इत्यधिकृत्य-"तुमेककर्तृके" इति इच्छार्थे यो विहितः तुम् तस्मिन्निच्छायां तुमि परतो धोः परस्त्यसंज्ञा भूत्वा सन् वा भवति यदा सन् तदा तुमः उप् ॥ "निमित्ताभावे नैमित्तकस्याप्यभावः" इति इटो निवृत्तिः । भू सन् इति स्थिते-नकारः "सन्यङोः" इति विशेषणार्थः । वलादेरिडिति प्राप्तः । "न वृद्भ्यः" कित्यूर्णुग्श्रूयुकः" इति च प्रस्तुत्य—

**८५३ ॥ सनि ग्राहिगुहश्च । ५ । १ । १२६ ।** ग्रहगुहा-

भ्यामुगंतेभ्यश्च धुभ्यः सनि किति इट् न भवति । इति निषिद्धः । "किद्वद्" इति "सनि" इति च वर्तमाने–

८५४ ॥ **सीकः** । १ । १ । ९८ । इगंतस्य धोः सकारादौ सनि परतः किद्वद् कार्यं भवति । इति किद्वद्भावात् "गागयोः" इत्येप् न भवति ।

८५५ ॥ **सनृयङोः** । ४ । ३ । १३ । सन्नंतस्य यङंतस्य च धोः आदेरचो द्वे रूपे भवतः । इति द्वित्वं । हलोऽनादेरित्यादि चकार्यं । भू भू ष इति स्थिते—

८५६ ॥ **तदंता धवः** । २ । १ । ४४ । ते सन्नादयोऽन्ते येषां ते तदंताः धुसंज्ञा भवंति । इति धुत्वे पूर्ववल्लडादिः । शपि "एध्यतः" इति पररूपं । बुभूषामि । बुभूषावः । बुभूषामः । इत्यादि । कर्मव्यतिहारे–व्यतिबुभूषे । व्यतिबुभूषावहे । व्यतिबुभूषामहे । इत्यादि । लङि–अबुभूषं । व्यत्यबुभूषि । लिङि–बुभूषेयं । व्यतिबुभूषेय । लोटि—बुभूषाणि । व्यतिबुभूषै । यकि–अतः" इत्यखं । बुभूष्यते देवदत्तेन । अनुबुभूष्यते कम्बलो देवदत्तेन । नेति ञिगिति जीडिति च वर्तमाने—

८५७॥ **भूषार्थसन्किरादीनां यक् च** । २ । १ । ७४ भूषार्थानां सन्नंतानां किरादीनां च कर्मकर्तरि यक ञि जीट् च न भवति । इति निषेधात् यक् न भवत्येव । कर्मवादत्यतिदेशात् दविधिश्च । अनुबुभूषते कम्बलः स्वयमेव । लङि—अन्वबुभूष्यत । अन्वबुभूष्यत । अन्वबुभूषत । लिङि—बुभूष्येत । अनुबुभूष्येत । अनुबुभूषेत । लोटि–बुभूष्यतां । अनुबुभूष्यतां । अनुबुभूषतामित्यादि । लोट् चाशिषि–बुभूष त्वं । बुभूषताद् वा । बुभूषतु भवान्, बुभूष-

ताद् वा। लिङि च-अतः खं। बुभूष्यासं। व्यतिबुभूषिषीय। लिटि–बुभूषांचकार। बुभूषांचकर। व्यतिबुभूषांचक्रे। लुङि–अबुभूषिषं। व्यत्यबुभूषिषि। लुटि—बुभूषितास्मि। व्यतिबुभूषिताहे। लृटि—बुभूषिष्यामि। व्यतिबुभूषिष्ये। लृङि-अबुभूषिष्यं। व्यत्यबुभूषिष्ये। इत्यादि। बुभूषिषीष्ट देवदत्तेन। अनुबुभूषिषीय। बुभूषांचक्रे। अबुभूषि। अन्वबुभूषि। अन्वबुभूषीष्ट कटः स्वयमेव। बुभूषिता। अनुबुभूषिताहे। बुभूषिष्यते देवदत्तेन। अनुबुभूषिष्ये। लृङि-अबुभूषिष्यत। अन्वबुभूषिष्ये। इत्यादि। "अचः" इति द्वित्वं।

८५८ ॥ प्राग्वत् सनः। १। २। ६८। सनः प्राचः प्रकृतेः परस्य लकारस्य यथा दो भवति तदा सन्नंतादपि। इति दः। र्धिधिषे। इत्यादि।

८५९ ॥ सन्यतः। ५। २। १००। सनि परे यतः तस्याकारस्य इकारादेशो भवति। पिपक्षामीत्यादि। निनंदिषामि। इत्यादि। दिध्वंसिषे। विव्यासामि। विव्यासे। इत्यादि।

८६० ॥ हन्यर्था सनि। ४। ४। १३। हंतेरिणिगिङादेशस्य गमेरजंतस्य च घोर्दीर्भवति झलादौ सनि परतः। जुहूषामि। जिहासे।

८६१ ॥ स्सनिमीमाभूरभलभशक्पत्पदोऽच इस्। ५। २। १७४। मी मा भूइत्येवमादीनामचः स्थाने इसादेशो भवति सकारादौ सनि परतः चस्य चोप्। "स्यगे सः" इति तकारः। धित्सामि। धित्से। "घस्लृजग्लुङ्घञ्सनि" इत्यदेर्घस्लभावस्य "स्यगे सः" इति तत्वं। द्वित्वादि। जिघत्सामि। व्यतिजिघत्से। शिशयिषे। विवक्षामि। विवक्षे।

८६२ ॥ **सनीवंतर्द्धभ्रस्जदम्भुस्वृश्रियूर्णुभरज्ञपिसनाम्** ॥ ७ । २ । ४९ ॥ इवंतेभ्यो धुभ्यः ऋधादिभ्यश्च सनि परतः इट् वा भवति । इट्पक्षे—"ष्णुकः" इत्येप् । दिदेविषामि । इडभावे "किद्वत्सनि सीकः" इति वर्तमाने—

८६३ ॥ **हलि** । १ । १ । ९९ । सकारादौ सनि परतो यो हल् तस्मिन् परे य इक् तस्य किद्वद् कार्यं भवति । इत्येप् निषिद्धः । "च्छ्वोः शूड् ङे च" इति वस्य ऊठि यण् ततो द्वित्वादि । दुद्यूषामि । पूर्ववदिडभावः कित्त्वं च ।

८६४ ॥ **षणि चाण्णिस्तोरेवाऽस्विदस्वदसहः** । ५ । ४५ । षणि षत्वभूते सनि परतः चादिण्णंतात् परेषां व्यंसानां स्विदिस्वादिसहवर्जितानां स्तोतेरेव सकारस्य षत्वं भवति । इति नियमादषत्वं । प्रसुसूषे । निनत्सामि । निनत्से ।

८६५ ॥ **सुञः सनस्ये** । ५ । ४ । ९७ । सुनोतेः सनि स्ये च परे षत्वं न भवति । सुसूषामि । सुसूषे ।

८६६ ॥ **स्मिङ्पूङृञ्ज्वशः सनि** । ५ । १ । १४८ । स्मिङ् पूङ् ऋ अञ्ज् अश् इत्येतेभ्यः इट् भवति सनि परे । अशिशिषे । निश्चिकिषामि । निश्चिचिषामि । निश्चिकिषे । निश्चिचिषे । "हलि" इति "किद्वद्भावादेप् न भवति । तुतुत्सामि । तुतुत्से । "हन्यचां सनि" इति दीः । "ऋतामिद्धोः" इति वर्तमाने—

८६७ ॥ **पुवादुत्** । ५ । १ । ८५ । पवर्गाद् वकाराच्च धोरवयवात् परस्य ऋकारस्य उकारादेशो भवति । रंतत्वं । "दीर्वोरिगुङः" इति दीः । मुमूर्षे । मुमुक्षाम । मुमुक्षे । कर्मकर्तरि—

**८६८ ॥ वौन्मुचो घेः । ५ । १ । १७८ ।** घिसंज्ञकस्य मुचेरचः ओकारादेशो भवति वा सनि सकारादौ परतश्चस्योप् । भूपेत्यादिना न यक् । मोक्षते । मुमुक्षते वत्सः स्वयमेव । रुरुत्सामि । रुरुत्से । बुभुक्षे । युयुक्षामि । युयुक्षे । सनीवंतेत्यादिना वेट् । तितनिषामि । इडभावे—

**८६९ ॥ तनो वा । ४ । ४ । १४ ।** तनोतेर्झलादौ सनि परतो वा दीर्भवति । तितांसामि । तितंसामि । तितनिषे । तितांसे । तितंसे । मिमनिषे । हन्यचां सनीति दीः ।

**८७० ॥ ऋतामिद्धोः । ५ । १ । ८३ ।** ऋकारांतस्य गोर्धोरिकारादेशो भवति । रंतत्वं । दीत्वं । चिकीर्षामि । चिकीर्षे । चिक्रीषामि । चिक्रीषे । वृतो वा लिमसाविति वर्तमाने–

**८७१ ॥ सनीट् । ५ । १ । ९७ ।** वृतः सनि परतो धोर्वेट् भवति । इडभावे-पुवादुद्'' इत्युत्वादि । विवरिषे । विवरीषे । वुवूर्षे । सनि ग्रहगुहश्चेति वेट् ।

**८७२ ॥ रुद्विद्मुष्ग्रहस्वप्प्रच्छां सनि च । १ । १ । ९७ ।** रुद् विद् मुष् ग्रह् स्वप् प्रच्छ इत्येतेषां सनि क्त्वात्ये च परे किद्वद् भवति । किद्वद्भावाद्–वशिन्यधि—इत्यादिना यण इक् । ढत्वकत्वे भष्भावादि । जिघृक्षामि । जिघृक्षे । चुचोरयिषामि । चिच्छादयिषामि । लिलक्षयिषामि । लिलक्षयिषे । युयोजयिषामि । युयुक्षामि । अर्चिचयिषामि । अर्चिचिषे । विवारयिषामि । विवरीषामि । वुवूर्षामीत्यादि । सर्वं पूर्ववत् । कर्तरि नवलकारेषु भावे कर्मणि कर्मकर्तरि च यथासंभवमभ्यूह्यं । इति सन्नंताः ।

भृशमभीक्ष्णं वा भवतीति विगृह्य–

८७३ ॥ धोर्यङ् भृशेऽभीक्ष्ण्येऽशुभ्रुचेः । २ । १ । १२ ।
शुभिरुचिवर्जिताद्धोः भृशेऽभीक्ष्ण्ये चार्थे वर्तमानात् यङ्त्यो भवति ।
ङकारो ङित्कार्यार्थः । सन्यङोरिति द्वित्वं । भूयभूय इति स्थिते—
हलोऽनादेरित्यादि चकार्यं ।

८७४ ॥ यङुपोरेप्ध्यकिदाहाकः । ५ । २ । २०३ ।
यङि यङुपि च चस्याकित आकारांतहाकवर्जितस्य एप् भवति
दीर्घत्वं च । इति इक एवन्यत्र दीः । बोभूय् इत्यतः पूर्ववल्लडादयः । "ङेदि-
तो दः" इति दः । एत्वं । बोभूये । बोभूयावहे । इत्यादि । भौ-यकि-

८७५ ॥ अतः । ४ । ४ । ५६ । गोरकारांतस्य अतः
खं भवत्यगे परतः । बोभूय्यते देवदत्तेन । कर्मणि कर्मकर्तरि च—
अनुबोभूय्ये, अनुबोभूय्ये स्वयमेव । लङि–अबोभूये । भौ—अबो-
भूय्यत । अन्वबोभूय्ये । लिङि—बोभूयेय । भौ—बोभूय्येत ।
अनुबोभूय्येय । लोटि–बोभूयै । भौ—बोभूय्यतां, अनुबोभूय्यै ।
लिङाशिषि—बोभूयषीय । भौ—बोभूयषीष्ट देवदत्तेन । अनु-
बोभूयषीय । लिटि—बोभूयांचक्रे । बोभूयांबभूव । बोभूयामास ।
भौ—बोभूयांबभूवे । अनुबोभूयांबभूवे । बोभूयामासे । "कृभ्व-
स्तिञ्, इत्यस्तिग्रहणसामर्थ्यात् "ब्रस्तेवचभू" इति अस्तेर्भूभावो न
भवति । लुङि-अबोभूयिषि । भौ-अबोभूय देवेन । अन्वबोभूय ।
अन्वबोभूयिष्ट वा । अन्वबोभूयिषातां । लुटि–बोभूयिताहे । भौ—
बोभूयिता देवेन । अनुबोभूयिताहे । लृटि—बोभूयिष्ये । भौ—
बोभूयिष्यते देवेन । अनुबोभूयिष्ये । लृङि—अबोभूयिष्ये ।
भौ—अबोभूयिष्यत देवेन । अन्वबोभूयिष्ये ।

८७६ ॥ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोः । २ । १ । ३१ ।

सूचि सूत्रि मूत्रिभ्य एव हलाद्यनेकाच्भ्योऽट्यश्वर्त्यूर्णुभ्य एव चाजादिभ्यो भृशाभीक्ष्ण्ये यङ् भवति नान्येभ्यः। इति नियमादेव 'एध वृद्धौ, इत्यस्य यङ् नास्ति। तथा-पापच्ये। ङौ यकि-अतः खे च-

**८७७ ॥ हलो यः। ४। ४। ५४।** हलंताद् गोः परस्य यकारस्य खं भवति अगे परतः। पापच्यते देवेन। कर्तरि भावे कर्मणि च कर्मकर्तरि च समानं। अपापच्यत। पापच्येत। पापच्यतां। पापचांचक्रे। पापचिषीष्ट। अपापचिष्ट। पापचिता। पापचिष्यते। अपापचिष्यत। इत्यादि। अपापचि देवेन। नानद्यते। यङुपोरिति वर्तमाने-

**८७८ ॥ नीग् वंचुस्रंसुध्वंसुभ्रंसुकसपतपदस्कंदां। ५। २। १०४।** वंचुप्रभृतीनां यङुबंतानां चस्य नीगागमो भवति। दनीध्वस्यते। "लिटीग्यणः साचोऽर्य्यांज्यं" वशो यङि" इति च वर्तमाने-

**८७९ ॥ स्वस्स्यमृव्यः। ४। ३। २९।** स्वस् स्यम् व्या इत्येतेषां यङि साचोऽर्य्यपरस्य यण इग् भवति। वेवीयते। "दीश्च्व्यक्रदूग" इति दीः। जोहूयते।

**८८० ॥ गत्यर्थात् कुटिले। २। १। १४।** गत्यर्थात् कुटिले वर्तमानात् यङ् भवति। जाहायते। भूमेत्यादिनेत्व। अभिदिधीयते। तन्नियमाददेर्यङ् नास्ति। यि क्ङित्यथङ्,, शाशय्यते। वाव्रश्च्यते। देदीव्यते। ङौ-देदीव्यते देवेन। लिङुत् कृज्यामिति दीत्वस्य पूर्वत्रासिद्धत्वादेप् प्राप्तः। "परेऽचः प्राचः" इत्यत्खस्य स्थानिवद्भावान्नास्ति। देदिवांचक्रे। सोष्ूयते। नानह्यते। सोपूयते। अशाश्यत। चचीयते। तोतुद्यते। अतोतुद्यत। तोतुद्येत। तोतु-

यतां । तोतुदिषीष्ट । तोतुदांचक्रे । अतोतुदिष्ट । अतोतुदि । तोतुदिता । तोतुदिष्यते । अतोतुदिष्यत । "रीङ् ऋतः,, इति रीङादेशः । मम्रीयते । मोमुच्यते । रोरुध्यते । बोभुज्यते । योयुज्यते ॥

**८८१ ॥ ङस्यातो नुक् । ५ । १ । २०५ ।** ङसञ्ज्ञकांतस्य गोर्यङुपोर्यश्चस्तस्याकारांतस्य नुगागमो भवति । तस्यानुस्वारादिः । तंतन्यते । मंमन्यते । चक्रीयते । चक्रीयते । वव्रीयते । वशिस्यादिना यण इक् । यङुपोरिति वर्तमाने–

**८८२ ॥ रीगृत्वतो । ५ । २ । २०९ ।** ऋकारवतो गोर्यङि चस्य रीगागमो भवति । जरीगृह्यते । इत्यादि । सर्वं पूर्ववन्नय ॥ इति यङंताः । किं च—

**८८३ ॥ यङः उप् । १ । ४ । १४४ ।** यङो बहुलमुप भवति । त्यखे त्याश्रयन्यायेन द्वित्वादि । ततो लडादिः । चर्करीतं चेत्यदादिषु भवत्सु पाठात यङुबंतस्यादादित्वं । तेन शप उप् मविधिश्च ।

तिपा शपानुबंधेन निर्दिष्टं यद् गणेन च ।
यच्चैकाच्ग्रहणं किंचित् पंचैतानि न यङुपि ॥१॥

इति यङो ङित्वाद् स्थानिवद्भावेन दो न भवति । थस्य ग पित्यचि हल्युण्योरौ" इति वर्तमाने—" ब्रुव ईट् " इत्यनुवर्त्य–

**८८४ ॥ यङ्तुरुस्तोर्बहुलं । ५ । २ । १७२ ।** यङुबंतात्तु रु स्तु इत्येतभ्यश्च परस्य हलादेः पितो गस्य बहुलं ईडागमो भवति । पित्स्वेव न ङित्सु । झस्य थादित्यत् । बोभवीमि । बोभोमि । बोभूवः । बोभूमः । बोभवीषि । बोभोषि । बोभूथः । बोभूथ । बोभवीति । बोभोति । बोभूतः । बोभवति । थवित्सेरिति झर्जुस् । अबोभवं । अबोभूव । अबोभूम । अबोभवीः । अबोभूः ।

अबोभूतं । अबोभूत । अबोभवीत् । अबोभोत् । अबोभूतां । अबोभवुः । बोभूयां । बोभूयाव । बोभूयाम । इत्यादि । सेर्हेरादेशो क्विदित्यर्वाट् नास्ति । बोभवानि । बोभवाव । बोभवाम । बोभूहि । बोभूतात् वा । बोभूतं । बोभूत । बोभवीतु । बोभोतु, बोभूतात् वा । बोभूतां । बोभवतु । बोभूयते देवेन । इत्यादि । बोभूयात् । बोभूयास्तां । बोभूयांचकार । अबोभवीत् । अबोभवीष्टां । अबोभवीषुः । प्रकृतिग्रहणे यङुबंतस्यापि ग्रहणमिति क्वचिदेव न सर्वत्र । तेन-भुभू इत्यादिना सरुव् नास्ति । तथा च कश्चित्-

लुङ्लिट्प्रतिपदोक्तानि सानुबंधकृतानि च ।
यङुबंतस्य नेष्टानि संख्यागणकृतानि च ॥ २ ॥

इत्याहुः । परे पुनरत्राप्युपमिच्छति । अबोभोत् । अबोभूतां । अबोभवुरित्यादि । बोभविता । बोभवितारौ । बोभवितारः । बोभविष्यति । अबोभविष्यत् । औटादि च-बोभाविषीष्ट । बोभविषीष्ट । बोभवांचक्रे । अबोभावि । इत्यादि । पापचामि । पापच्मि । पापच्वः । पापच्मः । पापचीषि । पापक्षि । पापक्थः । पापक्थ । पापचीति । पापक्ति । पापक्तः । पापचति । नानंदीति । नानंत्ति । दनीध्वंसीति, दनीध्वंस्ति वा । वावेति । वाव्याति । जोहवीति । जोहोति । जोहूतः । जाहेति । जाहाति । जाहीतः । दाधेति । दाधाति । धात्तः ।

**८८९ ॥ थस्य गे पित्यचि । ५ । २ । ९५ ।** थसंज्ञकस्य गोर्धेरुङ एपून भवति पित्यजादौ गे परतः । देदिवीति अनिट्पक्षे-घ्युङः,, इत्येपि "व्योः खे वल्कौ" इति वखे च सति-देदेति । "कस्य झल्क्व्योः क्ङिति" इत्येदनुवर्त्य-छ्वः शूठ् ङे चेति झलि कौ च केचिदूठमिच्छंति । तेनोठि यण्येपि च कृते-देद्योति । देद्यूतः । देदिवति । देदिवांचकार । सोषवीति । सोषोति । नानहीति ।

नानद्धि । सोषवीति । सोषोति । अशाशीति । अशाष्टि । चेचयीति । चेचेति । तोतुदीति । तोतोत्ति । रीगृत्वतामिति वर्तमाने–

८८६ ॥ रुग्रिग् चोपि । ५ । २ । २१० । ऋत्वतो गोर्यङ्लुपि चस्य रुग् रिग् चागमो भवति । मर्मरीति । मरिमरीति । मरीमरीति । मर्मर्ति । मरीमर्ति । मरिमर्ति । चर्करीति । चरिकरीति । चरीकरीति । चर्कर्ति । चरिकर्ति । चरीकर्ति । जर्गृहीति । जर्गर्ढि । इत्यादि नेयं । वृतुञ् वृत्तौ । वर्वृतीति । वर्वर्त्ति । इत्यादि । गृधु अभिकांक्षायां । जर्गृधीति । जर्गर्द्धि । इत्यादि । लङि–अजगृद्ध । ईडभावे--ध्युङः,, एप् । सिपः खं । भष्भावः । ततो धकारस्य जश्त्वं । "सिपि र्वा" इत्यधिकृत्य–दः,, इति विकल्पेन रिः । रो री- ति पूर्वस्य रखं । ढ्रिखेऽणः " इति दीः । अजर्घाः । अजगृद्धं । अजगृद्ध । अजगृधीन् । अजघार्त्ति । अजगृद्धां । अजगृधुः । इत्या- दि सप्रपंचप्रयोगतः प्रयोज्यं ॥ इति यङ्लुवंताः ॥

भवति कश्चित् तं भवंतं भावितस्य भवनं वा प्रयोजयतीति वि- गृहे–णिजिति वेति च प्रस्तुत्य—

८८७ ॥ हेतुमति । २ । १ । ३९ । हेतुमति स्वर्थे धोर्वा णिच् भवति । णकार ऐबर्थः । चकारो णाविति सामान्यग्रहणा- विघातार्थः । ऐब्रावादेशौ । धुसंज्ञा च । ततः पूर्ववल्लुडादयः । भावयामि । भावयावः । भाव यामः । इत्यादि ।

८८८ ॥ णिचः । १ । २ । ८६ । णिजंताद्धोः फलेशे कर्तरि लस्य दो भवति । भावये । भावयावहे । भावयामहे । इत्यादि । ङौ–यकि णः खं । भाव्यते । अभाव्यत । भाव्येत । भाव्यतां । कर्मकर्तरि—दाधिणिश्रिश्रंथिबचूद्नोध्न त्रिश्चति णिजंतद्धा

ञियकौ न भवतः । ततः शबादयः । भावयते स्वयमेव । इत्यादि । अभावयत । भावयेत । भावयतां । कौ—अभाव्यत देवेन । अन्वभाव्यत । अभावयत् । भावयेत् । भावयीत । कौ–भाव्येत । देवेन । कर्मकर्तरि यक् नास्ति शबेव । भावये स्वयमेव । भावयतु । भावयतात् वा । भावयतां । कौ—भाव्यतां । कर्मकर्तरि–भावयतां । भाव्यात् । भावयिषीष्ट । कौ–भविषीष्ट । भावयिषीष्ट देवेन । भावयांचकार । भावयांबभूव । भावयामास । भावयांचक्रे । भावयांबभूवे । भावयामाहे । एति हः,, इति हकारः । णिश्रिद्रुस्रोः कर्तरि कजिति कच् । भावि अ अम् इति स्थिते–लिड्‌चूकाचि धोरिति द्वित्वं ततो यणादेशस्तदपवादः पुनरियादेशः णः खं च प्राप्तं । परत्वात् णेरिति णः खं । "णौ कच्युङः प्रोऽशास्वक्र्यृदितः" इत्युङः प्रादेशः । "स्थानीवानल्विधौ" परेऽचः प्राचः,, इति च प्रस्तुत्य —

८८९ ॥ **द्वित्वेऽचि** । १ । १ । ५८ । द्वित्वनिमित्तेऽचि अजादेशो द्वित्वे कर्तव्ये स्थानिवद् भवति । इति स्थानिरूपं । एतच्च–

८९० ॥ **ओः पुयण्ज्ये** । ५ । २ । ११० । सनि परे द्विर्भावे चस्य उवर्णस्य पवर्गे यणि जकारे अकारे परे इकारादेशो भवति । इति इकारः । इति चस्योवर्णस्येत्वशासनाज्ज्ञायते । तेन भू इ अ अम् इति स्थिते पश्चाद्द्वित्वं चकार्यं । पूर्ववत् णिखेत्रावादेशप्रादेशाः । "घौ कच्यनक्खे सन्वद्" इति सन्वद्भावः । "ओः पुयण्ज्ये" इति चस्येत्वं । घेर्दीरनजादेरिति दीत्वं । अबीभवं । अबीभवे । इत्याद्यूह्यं ॥ एधयामि । लुङि–ऐदिधं । पाचयामि । अपीपचं । कौ–अभावि देवेन । अभाविष्ट । अभावयिषि । ञीटि णिखं । अबीभवं । लुटि—भावयितास्मि । भावयिताहे । कौ–भाविता देवेन । भाविताहे । भावयिताहे । भावयिष्यते । कौ–भविष्यते । भावयिष्यते ।

अभावयिष्यत् । अभावयिष्यत । कौ—अभाविष्यत । अभावयिष्यत । इत्याद्युन्नेयं । एधयामि । ऐदिधं । पाचयामि । अपीपचं । नंदयामि । अननंद । प्रध्वंसयामि । प्राद्ध्वंसं । ह्रीव्लीभीत्यादिना णाविति वर्तमाने—

८९१ ॥ शाच्छासाह्वाव्यावेपां युक् । ५ । २ । ४१ । शा प्रभृतीनां णौ परतो युगागमो भवति । संव्याययामि । समविव्ययं । ह्वाययामि, अजुहवं ।

८९२ ॥ ह्रीव्लीरीक्नूय्यर्तिक्ष्माय्यातां पुग्णावेप् । ५ । २ । ४२ । ह्री प्रभृतीनां णौ परतः पुगागमो भवति । ह्रापयामि अजीह्रपं । श्रद्धापयामि । श्रददीधपं । आदयामि । आदीदं । अतिशाययामि । अत्यशीशयं । वाचयामि । अवीवचं । देवयामि । अदीदिवं । सावयामि । असूषवं । सन्नाहयामि । समनीनहं । सावयामि असूषवं । आशयामि । आशीशं ।

८९३ ॥ चिस्फुरोर्वा । ४ । ३ । ५५ । चि स्फुर इत्येतयोरेचो णावात्वं वा भवति । ततः पुक् । निश्चापयामि । निश्चाययामि । निरचीचयं । तोदयामि । अतूतुदं । मारयामि । अमीमरं । मोचयामि । अमूमुचं । रोधयामि । अरूरुधं । भोजयामि । अबूभुजं । प्रयोजयामि । प्रायूयुजं । वितानयामि । व्यतीतनं । मानयामि । अमीमनं । कारयामि । अचीकरं । णाविति वर्तमाने ।

८९४ ॥ क्रीङ्जेः । ४ । ३ । ५३ । क्री इङ् जि इत्येतेषामेचो णावात्वं भवति । ततः पुक् । क्रापयामि । अचीक्रपं । वारयामि । अवीवरं । अनुग्राहयामि । अन्वजीग्रहं । चोरयामि । अचूचुरं । छादयामि । अचीच्छदं । लक्षयामि । अललक्षं । योज-

यामि । अयूयुजं । अर्चयामि । आर्चिचं । वारयामि । अवीवरमित्यादि योज्यं ॥ घटादीनां तु विशेषः । णोहेरुद्धुङः, इति "दोषो णाविति चाधिकृत्य ।

८९५॥ **घटादिकगेवनुजनीजॄष्णस्क्रसरञ्ज्यमोऽपर्यपस्खदकमूचम्यमः प्रोऽमूञ्योस्तु दीर्वा** । ४ । ४ । ९० । परि अप पूर्वस्खदिवर्जितानां घटादीनां कगे वनु जनी जॄष् ष्णस् क्रस् रंजि इत्येतेषां कमिचमिअमिवर्जितानाममंतानां च गूनामुङः प्रो भवति णौ परतः अम्ञि परे तु णौ दीर्वा भवति । घटै चेष्टायां । घटयामि । अघटि । अघाटि । व्यथैष् चलभीत्योः । व्यथयामि । अव्यथि । अव्याथि । कगे इति सौत्रो धातुः । कगयति । अकगि । अकागि । वनुङ् याचने । वनयति । अवनि । अवानि । जनीङ् प्रादुर्भावे । जनयति । अजनि । अजानि । जॄष्य् वयोहानौ । जरयति । अजरि । अजारि । ष्णस् नीरसने । स्नसयति । अस्नसि । अस्नासि । क्रस् हारणदीप्त्योः । क्रसयति । अक्रसि । अक्रासि । रंजौञ् रागे ॥ हल्ङः, इति श्नान्खमिति रंजेरिति चाधिकृत्य—

८९६ ॥ **णौ मृगरमणे** । ४ । ४ । २७ । रंजेरुङो नकारस्य खं भवति णौ परतो मृगाणां क्रीडायामर्थे । रजयति मृगान् व्याधः । अरजि । अराजि । गम्लृ गतौ । गमयति । अगमि । अगामि । शमु दमु उपशमने । दमयति । अदमि । अदामि । अपर्यपस्खदादेरिति किं ? स्खदैष् खनने । परिस्खादयति । अपस्खादयति । पर्यस्खादि । अपास्खादि । कमङ् कांतौ । कमृतेर्णिङीयाङिति णिङ् । कामयते । चमु अदने । आचामयति । अमु रोगे । आमयति ।

८९७ ॥ **शमोऽदर्शे** । ४ । ४ । ८१ । शमोऽदर्शेऽर्थे वर्तमानस्योङः शस्य प्रो भवति णौ परतः अम्ञि परे तु वा दीर्भवति ।

शमयति रोगं । निशमयति श्लोकान् । अशमि । अशामि । अदर्शे इति किं ? निशामयति । शमो दर्शे इत्येके । णौ कच्युङः प्रोऽशास्वक्ल्यृदितः, इत्यत्र अशास्वक्ल्यृदितः,, इति निषेधवचनात् प्रो न भवति । शास् अनुशिष्टौ । अनुशासयति । अन्वशशात् । माल मुख्ये । मालयति । अममालत् । गाथृङ प्रतिष्ठालिप्साग्रंथेषु । गाथयति । अजगाथत् । डुयाचृञ् चतिञ् चदिञ् याचने । याचयति । अययाचत् । सिकृङ् स्मिकृङ् श्रिकृङ् श्लिकृङ् शाकिङ् श्लकिङ् काकिङ् स्वाकिङ् त्रकिङ् ढौकृङ् लौकृङ् ष्वस्कै वष्कै मष्कै तिकै टिकै टिकृङ् रामिङ् आमिङ् गतौ । सेकयति । असिसेकत् । श्रिकयति । अशिश्रिकत् । ढौकयति । अडुढौकत् । ष्ठा गतिनिवृत्तौ । सत्वं । प्रस्थापयति । जिघ्रतिः,, इति वर्तमाने—

८९८ ॥ । तिष्ठतेः । ५ । २ । १३२ । स्था इत्येतस्य कच् परे णौ परतः उङः इकारो भवति । चस्योपिति वर्तमाने—

८९९ ॥ शरः खयि । ५ । २ । १८१ । चस्य शर उप् भवति खयि परतः । हलोऽनादेरुबपवादः । प्रातिष्ठपत् । इत्यादि सर्वं मूह्यं ॥ इति सनंतयङंतयङ्लुबंतणिजंताभ्यश्चतसृभ्यः प्रकृतिभ्यः लकाराः प्रदर्शिताः ॥ तेभ्य एव पराः निर्दिश्यंते । बुभूषति कश्चित् तमन्यः प्रयुङ्क्ते इति सन्नताद्धेतुमति णिचि अत इत्यखे धुत्वे च सति पूर्ववल्लडादयः । बुभूषयामि । इत्यादि । बुभूषये । इत्यादि । अबुभूषयं । अबुभूषये इत्यादि । बुभूषयेय । इत्यादि । बुभूषयाणि । बुभूषयै । इत्यादि । ण्यंतस्य सकर्मकत्वात् भावे नोदाहरणानि । कर्मणि—बुभूष्ये । इत्यादि । कर्मकर्तरि—दाधिणीत्यादिना ण्यंतत्वात् यक् नास्ति शप् भवत्येव । बुभूषये । अबुभूष्ये । अबुभूषये । बुभूष्येय । बुभूषयेय । बुभूष्यै । बुभूषयै । कर्तरि—बुभूष्यासं । बुभूषयिषीय । कर्मणोः—बुभूषिषीय ।

बुभूषयिषीय। बुभूषयांचकार। कौ—बुभूषयांचक्रे। बुभूषयां बभूवे। "णिकम्श्रिद्रुस्रोः कर्तरि काजिति काचि द्वित्वं। बुभूषि अ अमिति स्थिते-"चस्यैके" इति चस्य बु बु इति द्वित्वं। हलोऽनादेरिति उबादि। अबुबुभूषम्। "चस्यैके" इति चस्य द्वित्वाभावे अबुभूषं। अबुबुभूषे॥ कौ-अबुभूषि। अबुभूषिषि। अबुभूषयिष्ट। कर्मकर्तरि ञिट् नास्ति। बुभूषयितास्मि। बुभूषयिताहे। कौ-बुभूषिताहे। बुभूषयिताहे। बुभूषयिष्यामि। बुभूषयिष्ये। कौ-बुभूषिष्ये। बुभूषयिष्ये। अबुभूषयिष्यं। अबुभूषयिष्यं। कौ-अबुभूषिष्ये। अबुभूषयिष्ये॥ इत्यादि॥ बोभूयते कश्चित्तमन्यः प्रयुङ्क्ते तस्मिन् यङंतात् णिचि धुत्वे लडादयः। बोभूययामि। बोभूयये। अबोभूययं। अबोभूयये। बोभूययेयं। बोभूययेय। बोभूययानि। बोभूययै॥ इत्यादि सनंतणिजंतेन तुल्यं॥ बोभवीति कश्चित्तमन्यः प्रयुङ्क्ते इति यङ्लुवंताण्णिचि—बोभवयामि। बोभवये। इत्यादि। अबोभवयं। अबोभवये। बोभवयेयं। बोभवयेय। बोभवयानि। बोभवयै। इत्यादि॥ भावयति कश्चित्तमन्यः प्रयुङ्क्ते इति णिजंतात् णिचि—पूर्वस्य णेः खं। भावयामि। भावये। इत्यादि। अबीभवं। अबीभवे। एधयामि। ऐदिधं। पाचयामि। अपीपचं। इत्यादि। सन्नंतात् सन्नास्ति। "न सनः" इति निषेधात्। बोभूयितुमिच्छतीति यङंतात्सनि वलादेरिडितीटि अतः खे द्वित्वे च सति "प्राग्वत् सनः" इति दः। बुबोभूयिषे। द्वित्वाभावे-बोभूयिषे। कौ—बोभूयिष्यते। अनुबोभूयिष्ये। अबोभूयिषे। कौ- अबोभूयिष्यत। अन्वबोभूयिष्ये। बोभूयिषेयं। कौ-बोभूयिष्येत। अनुबोभूयिष्येय। बोभूयिषै। कौ-बोभूयिष्यतां। अनुबोभूयिष्ये॥ इत्यादि पूर्ववदुह्येयं॥ बोभवितुमिच्छतीति यङ्लुवंतात् सनि-बुबो-

भविषामि । बोभविषामि । कै–बोभविष्यते । अनुबोभविष्ये । इत्यादि नेयं। भावयितुमिच्छतीति णिजंतात्सनि इटि "द्विर्वेऽचि" इति णेरेवयादेशयोः स्थानिवद् भावः । "ओः पुयण्ज्ये" इति ज्ञापकात् णौ च ऐवावादेशयोः स्थानिवद्भावः । भू इ इति स्थिते भू भू इति द्वित्वमन्यत् पूर्ववत् । बिभावयिषामि । बिभावयिषे । कर्मणि—बिभावयिष्ये । एवं–एदिधयिषामि । पिपाचयिषामि । इत्यादि ॥ बुभूषयितुमिच्छतीति वाक्यमेव ॥ सनंतणिजंतात् सनि–द्वित्वादौ च-- बुबोभूषयिषति । बुबोभूषयिषते । द्वित्वाभावे—बोभूषयिषति । बोभूषयिषते । यङ्लुगणिजंतात् सनि–द्वित्वे च—बुबोभावयिषति । बुबोभावयिषते । द्वित्वाभावे—बोभावयिषति । बोभावयिषते ॥ णिजंतणिजंतात् सन्नोदाहियते णिजंतसनंतादविशेषात् । एताभ्य एवोदाहृतपंचप्रकृतिभ्यो णिज् विधीयते । यङंतसंनतात् णिचि—बुबोभूयिषयति । बुबोभूयिषयते । लुङि–कचि द्वित्वे च—अबुबुबोभूयिषत् । अबुबुबोभूयिषत । द्वित्वाभावे—बोभूयिषयति । बोभूयिषयते । अबोभूयिषत् । अबोभूयिषत । यङ्लुगंतसनंताण्णिचि—बुबोभविषयति । लुङि–कचि—अबुबुबोभविषत् । अबुबुबोभविषत । द्वित्वाभावे—बोभविषयति । अबोभविषत् । णिजंतसनंतात् णिचि—बिभावयिषयति । लुङि—कचि—अबिबिभावयिषत् । द्वित्वाभावे—अबिभावयिषत । यङंताणिजंतसनंताण्णिचि--द्वित्वे च—बुबोभूययिषयति । अबुबुबोभूययिषत । द्वित्वाभावे—बोभूययिषयति । अबोभूययिषत ॥ यङ्लुगंतणिजंतसनंताण्णिचि—बुबोभावयिषयति । लुङ—कचि—अबुबुबोभावयिषत् । द्वित्वाभावे—बोभावयिषयति । अबोभावयिषत । इति पंचभ्यो निर्दर्शिताः । इत्यादिसर्वं विभाव्य यथासंभवमभ्यूह्यं । एवं—एकोनविंशतिप्रकृतिभ्यो विहिताः । तदाह--

प्रकृतेस्सन्यङ्लुग्णिच् णिच् सन्नादेर्यङादितः ।
सन्यङ्ण्यादेस्सन्यङ्सन्नादेर्णिज्यङ्णिच्सन्नादेश्चतस्रोऽपि ॥

## अथ कण्ड्वादयः ।

कण्डूञ् गात्रघर्षणे ।

९०० ॥ **कण्ड्वादेर्यक्** । २ । १ । ४० । कंडूञ् इत्येवमादिभ्यो धुभ्यो यगित्ययं त्यो भवति । ककारः कित्कार्यार्थः । पुनर्धुसंज्ञायां—पूर्ववल्लडादयः । कण्डूयति । कंडूयते । अकंडूयत् । अकंडूयत । कण्डूयेत् । कंडूयेत । कंडूयतु । कंडूयतां । कंडूय्यात् । कण्डूयिषीष्ट । कंडूयांचकार । कंडूयांचक्रे । अकंडूयीत । अकंडूयिष्ट । कंडूयिता । कंडूयिष्यति । कंडूयिष्यते । अकंडूयिष्यत् । अकंडूयिष्यत । सनि—सन्यङोरित्यादेरकाचो द्वित्वं भवत्येकेषां मतं । चिकण्डूयिषामि । इत्यादि । यकस्तृतीयस्येत्यत्र "अचः" इति "ए के" इति च विभागापेक्षयानुवर्तमाने—तेनादेरनादेश्चाचस्तृतीयस्यैकाचो द्वे भवतः" इत्यपरे । तेषां कण्डूयियिषामि । इत्यादि । यगंतस्य यङ्यङ्लुपौ न संभवतः । णिचि—कंडूययति । कण्डूययते । अकंडूययत् । अकंडूययत । कण्डूययेत् । कंडूययेत । कण्डूययतु । कण्डूययतां । कण्डूय्यात् । कण्डूययिषीष्ट । कण्डूययांचकार । कण्डूययांचक्रे । लुङि—अचकण्डूयत ॥ यकस्तृतीयस्येत्यत्र "अचः" इत्यनुवर्तते इत्यस्मिन् दर्शने द्वित्वादिर्नास्ति "अचः" इत्यस्याभावात्—अकंडूयत । "अचः,, इति नानुवर्तते इत्यत्र तु—य य इति द्वित्वं । अकंडूययत । कण्डूययिता । कण्डूययिष्यति । कण्डूययिष्यते । अकंडूययिष्यत् । अकंडूययिष्यत । एवं-मंतु–रोषाप्रीणनयोः । मंतूये इत्यादि । वल्गु माधुर्ये । वल्गयामि । इत्यादि । असू परगुणासहने । असूयामि । इत्यादी ।

सनि—असूयियिषामि । इत्यादि । असूययामि । इत्यादि । आसूयत । हृणीञ् रूपलज्जयोः । हृणीयते । इत्यादि । सुखदुःख तत्करणे "अतः,, इत्यखं । सुखयामि । इत्यादि । सनि–हलो यः,, इति यखं । सुखिषामि । इत्यादि । णिचि—सुख्यायामि । इत्यादि । "वा क्यः" इति सूत्रे क्ययकोर्वेति केचित् पठंति । तेषां सुखयामीत्यादि ॥

इति कंड्वादयः ।

प्रकृतेः सुबंतप्रकृतिकाः ।

आत्मनः पुत्रमिच्छतीति विग्रहे—

९०१ ॥ **स्वेपः काम्यः । २ । १ । ७** । स्वस्यात्मनः संबंधि यदिबंतं तस्मादिच्छायामर्थे काम्यस्त्यो भवति वा । "तदंता धवः" इति धुसंज्ञायां—सुपो धुमृदोरिति सुप उप् । ततः पूर्ववल्लुडादयः । पुत्रकाम्यति । एवं—वस्त्रकाम्यति । कन्याकाम्यति । कविकाम्यति । राजकाम्यति । इदंकाम्यति । स्वःकाम्यति । अंतर्वर्त्तिनं सुपमाश्रित्य पदसंज्ञायां पदकार्यं नखादि । अपुत्रकाम्यत् । पुत्रकाम्येत् । पुत्रकाम्यतु । पुत्रकाम्यात् । पुत्रकाम्यात् । इति हलो य यगिति खमिति पक्षे यखं । पुत्रकाम्यांचकार । अपुत्रकाम्यीत ।

९०२ ॥ **हलो यः । ४ । ४ । ९४ ।** हलन्ताद्धोः परस्य यकारस्य खं । इतीह न भवति । पुत्रकाम्यिता । पुत्रकाम्यिष्यति । अपुत्रकाम्यिष्यत् । इत्यादि । सनि—

९०३ ॥ **सुपः । ४ । ३ । २** । सुबवयवस्य धोर्यस्य कस्यचिद् एकाचो द्वे रूपे भवतः । इति द्वित्वे पांचरूप्यं । पुपुत्रकाम्यिषति । पुतित्रिकाम्यिषति । पुत्रचिकाम्यिषति । पुत्रकामिम्यिषति । पुत्रकाम्यियिषति । एवं—वस्त्रकाम्यतीत्यादिषु नेयं । यङस्य नास्ति । णिचि पुत्रकाम्ययति । लुङि–कचि द्वित्वे चातुरूप्यं । अपुपुत्रकाम्यत् ।

अपुतत्रकाम्यत् । अपुत्रचकाम्यत् । अपुत्रकामम्यत । णावतो नाशादनक्ख इति निषेधात् सन्वद्भावो न भवति । तथा—पुत्रमिच्छत्यात्मन इति विग्रहे—

९०४ ॥ क्यजाझमः । २ । १ । ८ । स्वस्य संबंधिन इबंतादिच्छायामर्थे क्यज्वा स्यात् सा चेज्झिसंज्ञकान्मकारांताच्च न भवति । ककारः "नः क्ये,, इति विशेषणार्थः । चकारः सामान्यग्रहणाविघातार्थः । "ई घ्राध्मोः" "अस्य च्वौ इति चानुवर्तमाने—

९०५ ॥ क्याचि । ५ । २ । १५६ । गोरवर्णांतस्य ईकारो भवति क्याचि परतः । पुत्रीय इति स्थिते—पूर्ववल्लुडादयः । पुत्रीयति । कन्यीयति ।

९०६ ॥ नः क्ये । १ । २ ।११७। नकारांतस्य शब्दस्य क्ये परतः पदसंज्ञा भवति । क्य इति क्यङ् क्यच् क्यषित्येतेषां विशेषकाननुबंधानपास्य सामान्येन ग्रहणं । पदत्व नख । तत ईत्वं । राजीयति । शर्म्मीयति । "दीश्च्व्यकृद्ग" इति दीत्वं । कवीयति । शिखीयति । तरुणीयति । दंतिनीयति । पुत्रिणीयति । इक्षूयति । बधूयति । "रीङ् ऋतः" इति रीङ्—पित्रीयति । "एचोऽयवायाव्" इति वर्तमाने—

९०७ ॥ ञिय त्ये । ४ । ३ । ७६ । वकारांतो य आदेशः स यथास्थाने भवति यकारादौ त्ये परतः । गव्यति । नाव्यति । वाच्यति । स्रज्यति । सरित्यति । एतद्यति । युष्मद्यति । अस्मद्यति । "त्वमौ त्यद्यौ चैके" इति त्वमौ । त्वद्यति । मद्यति । "दीर्वोरिगुङः" इति वर्तते—

९०८ ॥ वा क्यः । ४ । ४ । ५५ । गोर्हलंतात् परस्य क्यच्क्यङोर्यकारस्य खं वा भवत्यगे परतः । अवाचीत्, अवाच्यीत् ।

इत्यादि । सनि—द्वित्वे—चातुरूप्यं । पुपुत्रीयषति । पुतित्रीयषति । पुत्रीयियिषति । पुत्रीयिषिषति । णिचि—पुत्राययति । लुङि—काचि—त्रैरूप्यं । अपुपुत्रीयत् । अपुतित्रीयत् । अपुत्रीययत् ।

९०९ ॥ अचः । ४ । ३ । ३ । धोः सुब्धोश्च परस्यादेरनादेश्च एकाचो द्वे रूपे भवतः । अशिश्वीयिषति । अश्वीयियिषति । अश्वीयिषिषति । इत्यादि नेयं ॥ प्रासादे इवाचरतीति विग्रहे—

९१० ॥ गौणादीपश्चाचारे । २ । १ । ९ । गौणादीबंतादिबताच्चाम्नि आचारेऽर्थे वा क्यष् भवति । पूर्ववल्लडादयः । प्रासदीयति कुड्यां । पर्यंकीयति मंचके । अश्वीयति वृषभे । इत्यादि । पुत्रमिवाचरतीति पुत्रीयति छात्रमाचार्यः । तल्पीयति किसलयं । राजीयति सेवकमित्यादि । अश्व इवाचरतीति विग्रहे—

९११ ॥ कर्तुः क्विः । २ । १ । १० । गौणादाचरणक्रियायाः कर्तुराचारेऽर्थे क्विर्भवति वा । स च सर्वोऽप्रयोगात् । पूर्ववदुस्वे सुबुप् । ततो लडादयः । अश्वति गर्दभः । गर्दभत्यश्वः । हसति बकः । इत्यादि । गल्भ इवाचरतीति विग्रहे—

९१२ ॥ गल्भक्लीबहोडाड्ङित् । २ । १ । ११ । गल्भादिभ्यो गणेभ्यः कर्तृभ्यः आचारेऽर्थे क्विर्ङिद् भवति । ङित्वाद्दः । गल्भते । क्लीबते । होडते । इत्यादि । श्येनायते काकः । अश्वायते गर्दभः । एनीमाचरति एतायते । श्येनीव—श्येतायते । रोहिणीव रोहितायते । श्येन इवाचरतीति विगृह्य—

९१३ ॥ क्यङ् च । २ । १ । १२ । गौणादाचारक्रियायाः कर्तुराचारेऽर्थे क्यङ् भवति । ककारः " नः क्ये,, इति विशेषणार्थः । ङकारो दार्थः । पूर्ववदीत्वादि । श्येनायते काकः । अश्वायते गर्दभः । एनीवाचरति एतायते । श्येनीव—श्येतायते । रोहिणीव—

रोहितायते । कुमारीव--कुमारायते वृद्धा । तरुणीव--तरुणायते जीर्णा । तद्यते । यद्यते । त्वद्यते । मद्यते । इत्यादि ।

९१४ ॥ **सः खं वा** । २ । १ ।१३ । गौणादाचारार्थे क्यङ् भवति । सकारस्यांते वर्तमानस्य खं वा भवति । पयायते, पयस्यते ।

९१५ ॥ **अप्सरसः** । २ । १ । १४ । अप्सरसः क्यङ्, संनिधाने सकारस्य नित्यं खं भवति । अप्सरायते ।

९१६ ॥ **भृशादेश्च्वौ स्तः** । २ । १ । १६ । भृशादेः कर्तुः च्व्यर्थे वर्तमानात् क्यङ् भवति । तत्संनियोगे सकारतकारांतस्य खं भवति । अभृशो भृशो भवति-भृशायते । शीघ्रायते । उन्मनस्-उन्मनायते । वेहत्-वेहायते । इत्यादि । पटदित्यतो " द्विश्चानेकाचोऽव्यक्तानुकरणाड्डाच्,, इति डाच् । " म्रौ डाचि,, इति तकारस्य पररूपं ।

९१७ ॥ **डाच्लोहितादिभ्यः क्यष्** । २ । १ । १७ । डाजंतेभ्यो लोहितादिभ्यश्च कर्तृवाचिभ्यः च्व्यर्थे क्यष् वा भवति ।

९१८ ॥ **क्यषो वा** । १ । २ । १०० । क्यषंताद् मं वा भवति । पटपटायति । पटपटायते । सिमसिमायते । सिमसिमायति । अलोहितो लोहितो भवति लोहितायति, लोहितायते । अचर्म चर्मवान् वा भवति--चर्मायति, चर्मायते इत्यादि । सुखं भुंक्ते इति विगृह्य-

९१९ ॥ **सुखादेर्भुजीपः** । २ । १ । १८ । सुखादेरिबंतात् भुज्यर्थे क्यङ् भवति । क्यष् प्रकृतं क्यङं न बाधते । सुखायते । दुःखायते । कष्टं चिकीर्षति इति विग्रहे—

९२० ॥ **कष्टकक्षकृच्छ्रसत्रगहनात् पापे चिकीर्षौ** । २ । १ । २० । कष्टादेः पापेऽर्थे वर्तमानादीबंतात् चिकीर्षत्यर्थे

क्यङ् भवति । कष्टायते । कक्षायते । पापं कर्तुमिच्छतीत्यर्थः । शब्दं करोतीति विग्रहे—

९२१ ॥ शब्दादिः कृञि । २ । १ । २१ । शब्दादेरिबंतात् कृञ्यर्थे क्यङ् भवति । शब्दायते । वैरायते । हस्तं निरस्यतीति विग्रहे—

९२२ ॥ निरस्यंगेभ्यो णिङ् । २ । १ । २५ । अंगेभ्यः शरीरावयववाचिभ्यः इबंतेभ्यो निरसि क्रियायां णिङ् भवति । णिचोऽपवादः । हस्तयते । पादयते । सूत्रं करोतीति विग्रहे—

९२३ ॥ मृदो ध्वर्थे णिच् बहुलं । २ । १ । २८ । मृदो धूनामर्थे णिच् भवति बहुलं । णकारो "णौ,, इति सामान्यग्रहणार्थः । चकारस्तदविघातार्थः । सुबुप् । " णाविष्ठवन्मृदः,, इत्यतिदेशात्–तुरिष्ठेमेयस्सु टेः,, इति टिखं । ततो लडादयः । सूत्रयति व्याकरणं । मंडयति माणवकं । मिश्रीयत्योदनं । स्वच्छाति वस्त्रं । लवणयति सूपं । व्रतयति पयः । कृतं गृह्णाति—कृतयति । तूस्तानि विहंति वितूस्तयति । केशान् विजटीकरोतीत्यर्थः । पाशं विमोचयति विपाशयाति । रूपं दर्शयति रूपयति । लोमान्यनुमार्ष्टि-अनुलोमयति । अन्वलुलोमत् । पटुमाचष्टे—पटयति । अपटवीत् । वृक्षमाचक्षे—वृक्षयति । अववृक्षत् । मूलमाचक्षे–मूलयति । अमुमूलत् । वहौञ् प्रापणे "तः,, इति क्तः । "स्वञ्चक्रुथादेः, इति साचो यण इक् । "हो ढः,, इति ढत्वं । "अधः,, इति तकारस्य धकारः । ष्टुत्वं " ढो ढि " इति ढखं । " ढ्रिखेऽणः " इति दीत्वं । ऊढमाचचक्षे णिचि टिखं । ऊढयति । लुङि कचि—द्वित्वं प्रति ढत्वादेरसिद्धत्वात् ' अचः, इति हि हि द्वित्वं । चकार्यं च । णिखं । " द्वित्वेऽचि,, इति स्थानिवद्भावात् सणेर्द्वित्वं । औजिढत् ।

तृणान्युद्धृत्य शातयति—उत्तृणयति । वस्त्रेण समाच्छादयति—संवस्त्रयति । वीणया उपगायति—उपवीणयति । तूलैरनुकृष्णाति-अनुतूलयति । श्लोकैरुपस्तौति – उपश्लोकयति । सेनयाभियाति-अभिषेणयति । वर्मणा संनह्यति—संवर्मयति । चूर्णैरवकिरति अवस्रंसयति वा—अवचूर्णयति । पासाच्छिनत्ति-पासयति । अश्वेनातिक्रामति-अत्यश्वयति । अतिहस्तयति । बहुलवचनात् इह न भवति । आख्यानमाचष्टे । इत्यादि सर्वत्र लकारेषु योज्यं ॥

इति सुबंतप्रकृतिकाः ।

अथ शत्रादयः कर्तृकर्मभावेषु कर्मकर्तरि च उदाह्रियंते "लटो वानितौ,, शतृशानौ,, इति वर्तमाने—

**९२४ ॥ सल्लटः । २ । ४ । १३ ।** सति काले यो लट् तस्य शतृशानौ वा भवतोऽनितौ परतः । "लो मं,, इति मविषये शता । " इकानं दः,, इति दविषये शानः । शकारः शित्कार्यार्थः ऋकारः उगित्कार्यार्थः । पूर्ववच्छबादि । भवदिति स्थितौ स्वादयः । शत्राद्यंता वाच्यलिंगत्वात्त्रिष्वपि लिंगेषु योज्याः । तत्र-पुंसि-भवान्, भवंतौ, भवंतः । इत्यादि । नपि-भवत्, भवती, भवंति । इत्यादि । स्त्रियां—भवंती, भवंत्यौ, भवंत्यः । इत्यादि ॥ व्यतिभू शान इति स्थिते—पूर्ववच्छबादौ कृते—

**९२५ ॥ आने मुक् । ५।१।१५६ ।** गोरकारांतादाने परतो मुगागमो भवति । उकारककारावितौ । व्यतिभवमानः । व्यतिभवमानौ । व्यतिभवमानाः । इत्यादि । व्यतिभवमानं, व्यतिभवमाने, व्यतिभवमानानि । इत्यादि । व्यतिभवमाना, व्यतिभवमाने, व्यतिभवमानाः । इत्यादि ॥ एधमानः, एधमानौ, एधमानाः । पचन् । पचत् । पचंती । पचमानः । पचमानं । पचमाना । नंदन् ।

नंदत् । नंदंती । ध्वंसमानः । ध्वंसमानं । ध्वंसमाना । व्ययन् । व्ययत् । व्ययंती । इत्यादि । "न थाद्,, इति नुमो निषेधः । जुह्वत् । जुह्वतौ । " वा नपः,, इति थे वा नुम् । जुह्वत् । जुह्वती । जुह्वति, जुह्वंति कुलानि । जुह्वती, जुह्वत्यौ । उज्जिहानः । दधत् । अभिदधानः । अदन् । अदत् । अदती । भा दीप्तौ–भान्, भाद् । "शीम्वोराद्,, इति वा नुम् । भांती । भाती । व्यत्यदानः । व्यत्यदानं । व्यत्यदाना । शयानः । शयानं । शयाना । ब्रुवन्, ब्रुवत्, ब्रुवती । ब्रुवाणः, ब्रुवाणं, ब्रुवाणा । दीव्यन्, दीव्यत्, दीव्यंती । " शप्श्याद्,, इति नित्यं नुम् । व्यतिदीव्यानः ॥ प्रसूयमानः ३ । नह्यन् ३ । नह्यमानः ३ । सुन्वन् । सुन्वानः । अश्नुवानः । चिन्वन् । चिन्वानः । तुदन्, तुदमानः ३ । म्रियमाणः । मुंचन् । मुंचमानः । रुंधन् । रुंधानः । भुंजानः । प्रयुंजन्, प्रयुंजानः । तन्वन्, तन्वानः । मन्वानः । कुर्वन्, कुर्वाणः । क्रीणान्, क्रीणानः । वृणानः । गृह्णन्, गृह्णानः । चोरयन् । छादयमानः । लक्षयन्, लक्षयमाणः । योजयन्, योजन् । अर्चयन् । अर्चयमानः । वारयन्, वारयमाणः । इत्यादि नेयं । भावे —भूयमानं देवदत्तेनेत्यादि । सर्वत्रैकवचनांतं नपुंसकलिंगमेव भवति । एध्यमानमस्माभिः । शय्यमानं युवाभ्यामित्यादि ॥ कर्मणि–अभिभूयमानो भानू राहुणा । अभिभूयमानं कर्म ध्यानेन । अभिभूयमाना बुद्धिः कर्मणा । इत्यादि त्रिलिंगं ॥ कर्मकर्त्तरि–अनुभूयमानः स्वयमेव । इत्यादि । लृटि च–भविष्यन्, भविष्यत्, भविष्यती, भविष्यंती वा । इत्यादि । व्यतिभविष्यमाणः । इत्यादि ॥ कौ–भविष्यमाणं । इति । अभिभाविष्यमाणः, अभिभाविष्यमाणो देवदत्तो गुरुदत्तेनेत्यादि । तथा–एधिष्यमाणः । पक्ष्यन् ३ । पक्ष्यमाणः ३ । नंदिष्यन् । इत्यादि । होष्यत् । व्यतिहोष्यमाणः । कौ-

हाविष्यमाणं । होष्यमाणं । हास्यमानः । कौ-हायिष्यमाणं । हास्यमानं वा । श्रद्धास्यन् , श्रद्धास्यमानः । कौ-श्रद्धायिष्यमाणं, श्रद्धास्यमानं वा । अत्स्यन् । अत्स्यत् । अत्स्यती, अत्स्यंती वा । इत्यादि नेयं ।

९२६ ॥ **लिटः क्वसुकानौ** ।२।२।१०३। धोः परस्य लिटः स्थाने क्वसु कानावादेशौ भवतः । क्वसुर्मसंज्ञः । कानो दसंज्ञः । उकारः उगित्कार्यार्थः । ककारः कित्कार्यार्थः । क्वसौ दे नियमाद् इट् प्राप्तः ।

९२७ ॥ **क्वस्यैकाच्घसः** । ५ । १ ।१११। आकारांतात् एकाज् घस एव क्वसाविट् भवति नान्यत्र । इति नियमान्निषिद्धः । ततः स्वादयः । बभूवान् । बभूवांसौ, बभूवांसः । इत्यादि । शसादावजादौ-

९२८ ॥ **वसोर्वस्योत्** ।४।४।१३२। गोर्भस्यावयवो यो वस् तस्य च यो वकारस्तस्य उशादेशो भवति । इत्युकारः । बभूवुषः । बभूवुषा । बभूवद्भ्यां । बभूवद्भिरित्यादि । बभूवुषी । इत्यादि । काने—व्यतिबभूवानः । इत्यादि । कौ—बभूवानं देवदत्तेन । बभूवान इत्यादि । "हलमध्ये लिट्यतः" इत्येत्वचखे । ततः एकाच्त्वादिट् । पेचिवान्, पेचिवत्, पेचुषी । पेचानः । ननंद्वान्, ननंद्वत्, ननदुषी । संविविवान्, संविविवत्, संविव्युषी । इत्यादि । जुहुवान्, जुहुवत्, जुहुवुषी । व्यतिजुहुवानः । जुहुवांचकृवान् । जुहुवांचकृवत्, जुहुवांचक्रुषी । व्यतिजुहुवांचक्राणः । "इटि चात्खे" इत्यात्खं । अभिदधिवान्, अभिदधिवत्, अभिदधुषी । अभिदधानः । जक्षिवान्, जक्षिवत्, जक्षुषी । व्यतिजक्षाणः । कौ—जक्षाणं देवदत्तेन । जक्षाणः । घस्लादेशाभावे—द्वित्वे दीत्वे कृते—एकाच्त्वादिट् । आदिवान्, आदिवत्, आदुषी । व्यत्यादानः । आदानं देवेन । आदानः ॥ कृतयणीको द्वित्वे दीत्वे च पूर्ववादिट् ।

ऊचिवान्, ऊचिवत्, ऊचुषी । ऊचानः ३ । क्तौ-ऊचानं । दिदिवान् । दिदिवत् । दिदिवुषी । व्यतिदिदिवानः । संस्नेहिवान्, संस्नेहिवत् । संस्नेहुषी । सन्नेहिवानः । ३ । सुषुवान्, सुषुवत्, सुषुवुषी । सुषुवाणः । निश्चिचिवान्, निश्चिचिवत्, निश्चिच्युषी । निश्चिच्यानः निश्चिकिवान्, निश्चिकिवत्, निश्चिक्युषी । निश्चिक्यानः । तुतुद्वान्, तुतुद्वत्, तुतुदुषी । तुतुदानः । रुरुध्वान्, रुरुध्वत्, रुरुधुषी । रुरुधानः । तेनिवान्, तेनिवत्, तेनुषी । तेनानः । चिक्रीवान्, चिक्रीवत्, चिक्रीयुषी । चिक्रीयाणः । चोरयांचकृवान्, चोरयांचकृवत्, चोरयांचक्रुषी । व्यतिचोरयांचक्राणः । इत्यादि ॥ सनि—बुभूषन् । व्यतिबुभूषमाणः । बुभूष्यमाणं देवेन । अनुबुभूष्यमाणः । अनुबुभूष्यमाणः स्वयमेव । बुभूषांचकृवान् । व्यतिबुभूषांचक्राणः । इत्यादि । बुभूषांचक्राणं । अनुबुभूषांचक्राणः । बुभूषिष्यन् । व्यतिबुभूषिष्यमाणः । जुहूषन् । व्यतिजुहूषमाणः । जिघित्सन् । व्यतिजिघत्समानः । इत्यादि ॥ कर्तर्याने—बोभूयमानः । क्तौ-बोभूय्यमानं देवेन । कर्म—अनुबोभूय्यमानः । कर्तरि काने—बोभूयांचक्राणः । क्तौ—बोभूयांचक्राणं । अनुबोभूयांचक्राणः । बोभूयिष्यमाणः । क्तौ—बोभूयिष्यमाणः । अनुबोभूयिष्यमाणः । यङ्लुपि-उवादेशः । "न थाद्" इति नुमभावः । बोभुवत्, बोभुवतौ, बोभुवतः । इत्यादि । "वा नपः" इति वा नुम् । बोभुवत्, बोभुवती, बोभुवति, बोभुवंति । इत्यादि । बोभुवंती, बोभुवंत्यौः, बोभुवंत्यः । इत्यादि । बोभुवांचकृवान् । बोभुविष्यन् । णिचि-भावयन् । भावयमानः । क्तौ-भाव्यमानं । भाव्यमानः । भावयमानः स्वयमेव । भावयांचकृवान् । भावयांचक्राणः । क्तौ—भावयांचक्राणं । भावयांचक्राणः । हावयन् । हावयमानः । क्तौ—

हाव्यमानं । हाव्यमानः । हावयांचकृवान् । हावयांचक्राणः । ङौ—हावयांचक्राणं । हावयांचक्राणः । हावयांचक्राणः । एवं—आदयन् । देवयन् । सावयन् । तोदयन् । रोधयन् । तानयन् । क्रापयन् । चोरयन्नित्यादि नेयं । सन्नंतणिजंत—बोभूषयन् । बोभूषयमाणः । ङौ—बोभूष्यमाणं, बोभूष्यमाणः । कर्मकर्तरि—दधिणीत्यादिना यगभावः । बुभूषयांचक्राणः । ङौ—बुभूषयांचक्राणं । बुभूषयांचक्राणः । लृटि—बुभूषयिष्यन् । बुभूषयिष्यमाणः । ङौ—बुभूषयिष्यमाणं । इत्यादि । यङंतणिजंते-बोभूययन् । बोभूययमानः । ङौ—बोभूययमानं । बोभूययमानः । कर्मकर्तरि—यगभावः । बोभूययमानः स्वयमेव । बोभूययांचकृवान् । बोभूययांचक्राणः । ङौ—बोभूययांचक्राणं । बोभूययांचक्राणः । बोभूययिष्यन् । बोभूयायिष्यमाणः । बोभूययिष्यमाणः स्वयमेव ॥ यङुबंतणिजंते—बोभावयन् । बोभावयमानः । ङौ—बोभाव्यमानं । बोभाव्यमानः । बोभावयमानः स्वयमेव । बोभावयिष्यन्नित्यादि । कंडूयत् । कंडूयमानः । ङौ—कंडूयमानं । कंडूयमानः । कंडूयांचकृवान् । कंडूयांचक्राणः । ङौ—कंडूयांचक्राणं । कंडूयांचक्राणः । कंडूयिष्यत् । कंडूयिष्यमाणः । इत्यादि च सविशेषमवसेयं । इति शत्रादिपरिच्छेदः ।

नमः श्रीपूज्यपादाय लक्षणं यदुपक्रमं ।
यदेवात्र तदन्यत्र यन्नात्रास्ति न तत्क्वचित् ।

इति प्रक्रियावतारे मिङ्विधिःपंचमः ॥

अथ कृदंताः प्रदर्श्यंते ।

जिष्णोःकिरीटमाणिक्यादंघ्रिकंजमलंकृतं ।
भवाटव्यटितश्रांतं रक्षत्वाजस्रमर्हतः ।

**९२९ ॥ कृदमिङ् । २ । १ । ९९ ।** इतः प्रभृति घोर-

धिकारे मिङ्वर्जिताः वक्ष्यमाणास्त्याः कृत्संज्ञा भवंति। इति अधिकारेण कृत्संज्ञा–कृतकर्तर्यञ्झिरिति प्रयोजनं।

**९३० ॥ प्राक् क्तेर्वाऽसमः । २ । १ । १०० ।** स्त्रियां क्तिरिति वक्ष्यते। प्रागेतस्मात् क्तिसंशब्दनात् असमस्त्यो वा भवति। इत्यधिकारो वेदितव्यः। अपवादेन बाधितस्योत्सर्गस्य पुनरपवादविषये अनेन समावेशो विधीयते।

**९३१ ॥ ण्वोर्ण्याः । २ । १ । १०१ ।** ण्वुतृजिति वक्ष्यते। प्रागेतस्मात् ण्वुसंशब्दनात् वक्ष्यमाणा ण्यसंज्ञा त्या भवंति। तयोर्ण्यक्त्वार्थ इति प्रयोजनं।

**९३२ ॥ तव्यानीयौ ।२।१।१७२।** धोः परतः तव्यानीय इत्येतौ त्यौ भवतः। ततः स्वादयः। भवितव्यं। भवनीयं पुंसा। एधितव्यं, एधनीयं विद्वद्भिरित्यादि। अभिभवितव्यः। अभिभवनीयः शत्रुः। पक्तव्यः, पचनीयः, ओदनः। हर्तव्या, हरणीया भूः। होतव्यं, हवनीयं हविः। अत्तव्यं, अदनीयं घृतमित्यादि।

**९३३ ॥ नशमज्जोर्झलि ।५।१।४०।** नश् मस्ज इत्येतयोर्झलादौ त्ये नुम् भवति। नंष्टव्यं। नशनीयं। मङ्क्तव्यं। मज्जनीयं।

**९३४ ॥ योऽचोऽय्वास्वुः । २ । १ । १०३ ।** धोरजंताद् यस्त्यो भवति ण्यापवादः या आसु ऋकारांत इत्येतान् वर्जयित्वा। लव्यं। पूञ्–पव्यं।

**९३५ ॥ ईद्य ये ।४।४।६८।** आकारांतस्य गोरीकारादेशो भवति यत्ये परे। धेयं। देयं। आस्थेयं। अनुमेयं। विज्ञेयं। प्रहेयं।

**९३६ ॥ ण्यिस्त्ये । ४ । ३ । ७६ ।** यकारादौ त्ये एचो अवादयो भवंति। इत्यव्। भव्यं हव्यं। श्रव्यं। लव्यं। पव्यं। इत्यादि।

अय्वास्त्वुरिति किं ? यु मिश्रणे-याव्यं। षुञ् अभिषवे। आङ्पूर्वः। आसाव्यं। कार्यं। हार्यं।

९३७॥ **पोरदुङोऽत्रपिवपिरपिलपिजपिजभिचमिदभेः** ।२।१।१०४। त्रपादिवर्जितात् पवर्गांतात् अकारोङो यस्त्यो भवति। शपौ क्रोशे-शप्यं। लभ्यं। गम्यं। रम्यं। त्रपादिनिषेधः किं ? अपत्राप्यं। डुवपौञ् वीजसंताने। वाप्यं। रप लप व्यक्तायां वाचि। राप्यं। लाप्यं। जप मानसे च। जाप्यं। जभ मैथुने। जाभ्यं। चमु अदने। आचाम्यं। दभि सौत्रो धातुः। दाभ्यं।

९३८॥ **यतिचतितकिशकिशसिसह्यजेः** ।२।१।१०५। यत् चत् तक् शक् शस् सह् याजि इत्येतेभ्यो यस्त्यो भवति। यतिञ् प्रयत्ने। यत्यं। चतिञ् याचने। चत्यं। तक हसने। तक्यं। शक शकने। शक्यं। शस् हिंसायां। शस्यं। षहै मर्षणे। सह्यं। यजीञ् दानादौ। याज्यं।

९३९॥ **गदमदयमोऽगेः** ।२।१।१०६। गद मद यम इत्येतेभ्यो गिरहितेभ्यो यो भवति। गद्यं। मद्यं। यम्यं। अगेरिति किं ? निगाद्यं। प्रमाद्यं। आयाम्यं।

९४०॥ **चरेः** ।२।१।१०७। चरेरगिपूर्वाद् यो भवति। ण्यापवादः। चर्यं।

९४१॥ **आङोऽगुरौ** ।२।१।१०८। आङ्पूर्वाच्चरेर्यो भवति। चर्यो देशः। अगुराविति किं ? आचार्यः भट्टाकलंकः।

९४२॥ **वदः सुपि क्यप् च** ।२।१।१११। वदेर्गिवर्जिते सुपि वाचि क्यप् भवति यश्च। ककारः कित्कार्यार्थः। पकारस्तुगर्थः। क्यपि-"स्वब्वच्छयादेः" इति यण इक्। "वागमिह्" इति

वाक्सः । ब्रह्म उद्यते ब्रह्मणा उद्यते इति ब्रह्मोद्यं । ब्रह्मवद्यं । सत्य-मुद्यते इति सत्योद्यं । सत्यवद्यं ।

९४३ ॥ **भूयहत्याग्निचित्या भावे** । २ । १ । भूय हत्या अग्निचित्या गिवर्जिते सुपि वाचि क्यबंता निपात्यंते भावे । भूयेति भवतेर्नपुंसके भावे क्यप् । ब्रह्मणो भवनं ब्रह्मभूयं गतः । देवभूयं गतः । हत्येति हंतेः स्त्रियां भावे क्यप् नकारस्य च तकारो निपात्यः । ब्रह्मणो हतिः ब्रह्महत्या । अग्निचित्येति अग्निपूर्वाच्चिञः स्त्रियां भावे क्यप् तुक् च । अग्निचित्या । अग्निग्रहणमन्यसुब्निवृत्त्यर्थं ।

९४४ ॥ **शास्स्त्वेतिवृञ्दृजुषः** । २।१।११३ । शास् स्तु एति वृञ् दृ जुष् इत्येतेभ्यो धुभ्यः क्यप् भवति । न यो वर्तते चानुकृष्टत्वात् सुप्यगेरित्येव । शासु अनुशिष्टौ ।

९४५ ॥ **शासोऽङ्हलीत्** । ४।४।३५ । हल्ङः क्ङिति चानुवर्तते । शासो गोरुङो अङि हलादौ च क्ङिति परतः इकारादेशो भवति । "शास्वसघसां" इति षत्वं । शिष्यः । स्तुञ् स्तुतौ । स्तुत्यः एतीति इणिको ग्रहणं । इण् गतौ । इत्यं । इक् स्मरणे । इत्यं । इङ् अध्ययने । अधीत्यं । वृञ् प्रादुर्भावः । प्रवृत्यः । दृञ् अनादरे । आ-दृत्यं । जुषिञ् प्रीतिसेवनयोः । जुष्यं ।

९४६ ॥ **ऋदुङोऽक्लृप्चृतृचः** । १ । १ ।११४ । क्लृप् चृति ऋचिवर्जितेभ्यः ऋकारोङ्के धुभ्यः क्यप् भवति । वृतुञ् वर्तने । वृत्यं । शृधुङ् शब्दकुत्सायां । शृध्यं । अक्लृप्चृतृच इति किं ? कल्प्यं । चर्त्यं । अर्च्यं । ण्यापवादः ।

९४७ ॥ **ण्यः** ।२।१।१२२। धोर्ण्यस्त्यो भवति । णकार ऐवर्थः । कार्यं । हार्यं । पच् युज् भुजित्यतो ण्यः ।

९४८ ॥ **चजोः कुर्घिण्ये तेऽनिटः** ।५।२।६४। तेऽनिटो

गोश्चकारजकारांतस्य कुत्वं भवति घिति ण्ये च परतः । पूर्ववद-न्यत् । पाक्यं । योग्यं । भोज्यं । वच् इत्यतो ण्यः ।

९४९ ॥ **निदाघावदाघार्घवाक्यं खौ** । ५ । १ । ६५। निदाघादयः शब्दाः कृतकुत्वादयो निपात्यंते खौ । वाक्यं । अन्यत्र-वाच्यं । पच् सिच् इत्यतो ण्यः ।

९५० ॥ **ण्य आवश्यके**।५।२।७४। अवश्यस्य भाव आवश्यकं । तस्मिन्नावश्यकेऽर्थे ण्ये परतः चजोः कुत्वं न भवति । "ण्यः" इत्यावश्यके ण्यः । मयूरव्यंसकादित्वात् सः । "व्येऽवश्यमः" इति मखं । अवश्यपाच्यं, अवश्यसेच्यं ।

९५१ ॥ **युजत्यजप्रवचां** । ५।२।७५ । युज् त्यज् प्रवच् इत्येतेषां ण्ये परतश्चजोः कुत्वं न भवति । योज्यं । त्याज्यं । प्रवाच्यं ।

९५२ ॥ **भुजोऽदौ** ।५।१।७६। भुज् इत्येतस्याद्यर्थेऽभ्य-वहारे वर्त्तमानस्य ण्ये कुत्वं न भवति । भोज्य ओदनः । अदाविति किं ? भोग्यः कंबलः ।

९५३ ॥ **निप्राद्युजः शकि** । ५ । २ । ७७ । नि प्र इत्येताभ्यां परस्य युजः शक्यतेर्गम्यमाने कुत्वं न भवति । नियोक्तुं शक्यः नियोज्यः, प्रयोज्यः । शकीति किं ? नियोग्यः । प्रयोग्यः ।

९५४ ॥ **ओरावश्यके** । २ ।१।१२४ । उवर्णांतादोरवश्यं भावे द्योत्ये ण्यो भवति । यापवादः । पूञ् पवने । इत्यतो ण्ये "ञ्णि त्ये" इत्याव् । पाव्यं । अवश्यपाव्यं । लूञ् छेदने । लाव्यं । अव-श्यलाव्यं । भू-भाव्यं । अवश्यभाव्यं ।

९५५ ॥ **ण्वुतृच्** ।२।१।१२९। सर्वेभ्यो धुभ्यो ण्वु तृच् इत्ये-तौ त्यौ भवतः । णकार ऐवर्थः । चकारः "ण्वुतृज्भ्यां च" इति विशेषणार्थः ।

९५६ ॥ **वोरकः** । ५ ।१।१। वु इत्येतस्य गोर्निमित्तभूतस्य अक इत्ययमादेशो भवति । भावकः । भविता । कारकः । कर्ता । नायकः । नेता । पाचकः । पक्ता । मोचकः । मोक्ता । इत्यादि त्रिषु लिंगेषु योज्याः । लोदिदचोऽपच्छ्रिश्रिशीत्यादिनाऽनिट्त्वमिट्त्वं च प्रत्येयं ।

९५७ ॥ **गाङ्कुटामञ्णि ङिद्वत्** ॥ १।१।८९। गाङित्येतस्य कुटादीनां च धूनां अञ्णि त्ये परतो ङितीव कार्यं भवति । संकोटकः । संकुटिता । उद्घोटकः । उद्घुटिता ।

९५८ ॥ **इटि विजः** । १ । १ । ९० । विजेर्धोरिडादौ त्ये ङित्कार्यं भवति । उद्विजिता ।

९५९ ॥ **हनस्तोऽणश्ञौ** । ५ । २ । ३५ । हंतेर्णश्ञि-वर्जिते ञ्णिति परे नकारस्य तकारादेशो भवति ।

९६० ॥ **हो हनो ञ्णिन्नि** । ५ । २ । ६७ । हंतेर्हकारस्य ञ्णिति त्ये नकारे च परतः कुत्वं भवति । घातकः । हंता ।

९६१ ॥ **कृञ्ञौ युक्** । ५ । २।३७। आकारांताद्धोः कृति ञ्णिति ञौ च युक् भवति । दायकः । दाता । विधायकः । विधाता । गायकः । गाता ।

९६२ ॥ **न मोऽकम्वम्यम्रम्नम्गम्चमः** ।५।२।३८। कमि वमि यमि रमि नमि गमि चमिवर्जितस्य मांतस्य धोः गोः कृति ञिति णिति ञौ च यदुक्तं तन्न भवति। "उक्ोऽतः" इति ऐप् न भवति । शमकः । शमिता । तमकः । तमिता ।

९६३ ॥ **जन्वधेः** । ५ । २ । ३९ । जन् वधि इत्येतयोः कृति ञ्णिति ञौ च यदुक्तं तन्न भवति । जनकः । जनिता । वधकः । वधिता ।

९६४ ॥ **जभोऽचि** । ५ । १ । ४१ । जभ इत्येतस्याजादौ त्ये नुम् भवति । जंभकः । जंभिता ।

९६५ ॥ **रधः** । ५ । १ । ४२ । रध इत्येतस्याजादौ त्ये परतो नुम् भवति । रंधकः । " ऊदिद्रूत्रः,, इति पक्षे इट् ।

९६६ ॥ **नेट्यलिटि** । ५ । १ । ४३ । रध इडादावलिटि त्ये नुम् न भवति । राधिता । रद्धा ।

९६७ ॥ **रभः** । ५ । १ । ४४ । रभ इत्येतस्याजादौ त्ये नुम् न भवत्यलिटि । आरंभकः । आरब्धा ।

९६८ ॥ **लभेः** । ५ । १ । ४५ । लभ इत्येतस्याजादौ लिङ्वर्जितस्य नुम् भवति । लंभकः । लब्धा ।

९६९ ॥ **मृजेरैप्** । ५ । २ । १ । मृजेर्द्धोरैप् भवति गागयोः परतः । संमार्जकः । संमार्जिता । संमार्ष्टा । सनि-बुभूषकः । बुभूषिता । यङि-बोभूयकः । बोभूयिता । यङुपि-बोभावकः । बोभाविता । णिचि—भावकः । भावयिता ।

९७० ॥ **तीच्छसहलुभरुषरिषः** । ५ । १ । १०३ । इच्छ सह लुभ रुष रिष इत्येतेभ्यस्तकारादावगे वा इट् भवति । इच्छतीति इषेः छादेशभाजो ग्रहणं । एषिता । सहिता । लोभिता । रोषिता । रेषिता । इडभावे—टुत्वादि ।

९७१ ॥ **सहवहोऽस्यौः** । ४ । ३ । ३०३ । सहि वहि इत्येतयोरवर्णस्य ढूखे सत्यौकारादेशो भवति । एष्टा । सोढा । लोब्धा । रोष्टा । रेष्टा ।

९७२ ॥ **पचादिभ्योऽच्** । २ । १ । १३० । पच् इत्येवमादिभ्यो धुभ्योऽजित्ययं त्यो भवति । पचतीति पचः । वचः । भवः ।

करः । हरः । नयः । लोलुवः । पोपुवः । मेघः । श्विचः । श्वपचः । चक्रधरः । बहुवचनादाकृतिगणः ।

९७३ ॥ नंद्यादिभ्योऽनः । १ । १ ।१३१। नंदि इत्येवमादिभ्योऽन इत्ययं स्यो भवति । नंदयतीति नंदनः । णिखं । वासनः । मादनः । विदूषणः । " दोषो णौ,, इत्यूकारः । साधनः । वर्द्धनः । शोभनः । रोचनः । एतेभ्यो ण्यंतेभ्योऽनः । सहनः । पतनः । इत्यादि ।

९७४ ॥ ग्रहादिभ्यो णिन् । १ । १ । १३२। ग्रह इत्येवमादिभ्यो णिन् स्यो भवति । गृह्णातीति ग्राहयतीति च ग्राही । उद्वासत इति उद्वासी । तिष्ठतीति स्थायी । मंत्रयतीति मंत्री । समर्थयति इति समर्थी इत्यादि ।

९७५ ॥ ज्ञाकॄगॄप्रीगुङः कः । १ । १ ।१३९। ज्ञादिभ्य इगुङ्भ्यश्च धुभ्यः कस्यो भवति । जानातीति ज्ञः ॥ "इटि चात्वं,, इति आत्वं । कॄ विक्षेपणे । " ऋतामिद्धोः " इतीद् । किरतीति किरः । गॄ निगरणे ।

९७६ ॥ ग्रोऽचि । ५ । ३ । ६३ । गॄ इत्येतस्य घोरजादौ स्ये परे रेफः लत्वं वा भवति । गिरतीति गिरः । गिलः । प्रीञ् प्रियदीप्त्योः । प्रीणातीति प्रियः । लिख अक्षरविन्यासे । लिखतीति लिखः । बुधः । बुधः । युधः । इत्यादि ।

९७७ ॥ गावातोऽनिक् । १ । १ ।१४०। गो वाचि घोराकारांतात् को भवति अनिक् च । प्रतिष्ठत इति प्रस्थः । त्रैङ् पालने । सुत्रं । ग्लै हर्षक्षये । सुग्लः । इत्यादि । अनिगिति किं ? ह्वेञ् स्पर्द्धाशब्दयोः । प्रह्वः । ज्या वयोहानौ । प्रज्यः । इत्यादि । " स्वव्यञ्जुयादेः,, इत्यादिना पणिक न भवति ।

९७८ ॥ **ज्वलादिग्रहाद् वा । २ । १ । १४० ।** ज्वलादिभ्यो ग्रहश्च धोरगौ वाचि णत्यो वा भवति । पक्षे-अच् । ज्वलतीति ज्वालः, ज्वलः । साहः, सहः । रामः, रमः । ग्राहः, ग्रहः ।

९७९ ॥ **तनूश्यादृव्यधास्रुसंस्रतीण्श्वसः । २ । १ । १४९ ।** तनादिभ्यो धुभ्यो णो भवति । तानः । उत्तानः । श्यैञ् गतौ । अवश्यायः । आत्—दायः । ग्लायः । व्यधो ताडने । व्याधः । स्रु गतौ । आस्रावः । संस्रावः । इण् गतौ । अत्यायः । श्वस् प्राणने । श्वासः । आश्वासः ।

९८० ॥ **आशिषि वुच् । २ । १ । १५३ ।** धोराशिषि गम्यमानायां वुच् भवति । चकारः "त्यस्थेऽचित्क्यपीद्"-इत्यादिना विशेषणार्थः । जीवतात्—इत्याशास्यमानो जीवकः । नंदकः वर्द्धकः । जीवका । नंदका । वर्द्धका ।

९८१ ॥ **कर्मण्यण् । २ । २ । १ ।** कर्मणि वाचि धोरण् भवति । कुंभं करोतीति कुंभकारः । छत्रधारः । शरलावः । वेदाध्यायः । चर्चावादः । कुंभकारी । छत्रधारी इत्यादि ।

९८२ ॥ **आतः कोऽह्वावामः । २ । २ । ३ ।** कर्मणि वाचि ह्वा वा मा वर्जितादाकारांतात् धोः को भवत्यणोऽपवादः । गां ददातीति गोदः । कंबलदः । पार्ष्णित्रः । सर्वज्ञः । क्षितिपः । ब्रह्मज्यः । अह्वावाम इति किं ? स्वर्गह्वायः । ततुवायः । धान्यमायः ।

९८३ ॥ **प्रे । २ । २ । ४ ।** कर्मणि वाचि प्रशब्दे च धोरातः को भवति । तत्वप्रदः । धर्मप्रज्ञः । सिद्धे सत्यारंभो नियमार्थः । "प्र एव गौ नान्यस्मिन्" इति-गोसंदायः ।

९८४ ॥ **दाज्ञः । २ । २ । ५ ।** कर्मणि प्रशब्दे च

वाचि दा ज्ञा इत्येताभ्यां को भवति । मोक्षप्रदः । मार्गप्रज्ञः । अय-मपि नियमः । दाज्ञ एव नान्यस्मात्" इति—पार्ष्णिमत्रायः ।

९८५ ॥ सुपि । २ । २ । ७ । सुपि वाचि घोरातः कौ भवति । कच्छेन पिबतीति कच्छपः । द्विपः । पादपः। समस्थः।विषमस्थः।

९८६ ॥ **गोंबांबभूमिसव्यापाद्वित्रिकुशेकुशंककुमंजिपुंजि-परमेबर्हिर्दिव्यग्नेः स्थः** । ५ । ४ । ७५ । गवादिभ्यः परस्य तिष्ठतेः सकारस्य षत्वं भवति । गोष्ठः । अंबाष्ठः । अंबष्ठः । भू-मिष्ठः । सव्यष्ठः । द्विष्ठः । त्रिष्ठः । कुष्ठः । शेकुष्ठः । शंकुष्ठः । अंगुष्ठः । मंजिष्ठः । पुंजिष्ठः । परमेष्ठः । बर्हिष्ठः । दिविष्ठः । अग्निष्ठा ।

९८७ ॥ **नखमुचादयः** । २ । २ । ८ । नखमुच इत्ये-वमादयः शब्दाः शिष्टप्रयोगतः साधवो भवंति । नखान् मुंचंति—अणोऽपवादः—नखमुचानि धनूंषि । मूलानि विभुजति मूलविभुजो रथः । कौ मोदते—कुमुदं । जले रोहति जलरुहं ।

९८८ ॥ **ओऽर्हः** । २ । २ । १४ । कर्माणि वाचि अर्हते-रत्यो भवति । इति पूजार्हो जिनः । पूजार्हा प्रतिमा ।

९८९ ॥ **धृञोऽसूत्रे** । २ । २ । १५ । कर्मण्यसूत्रे वाचि धरतेरत्यो भवति । जलं धरतीति जलधरः । शशधरः । चक्रधरः । गणधरः । असूत्र इति किं ? सूत्रधारः ।

९९० ॥ **शम्यस्थो घोः खौ** । २ । २ । १६ । शमि वा-चि स्थावर्जिताद्घोरत्यो भवति खुविषये । शं भवति—शंभवः । शंकरः । अस्थ इति किं ? शंस्था । शमीति किं ? संस्था । टाबप्यजादित्वात् । खाविति किं ? शंकरी जिनविद्या । हेत्वादिना अट् ।

**९९१ ॥ हेतुशीलानुलोम्येऽशब्दश्लोककलहगाथावैर-चाटुसूत्रमंत्रपदे । २ । २ । २७ ।** हेतुः कारणं । शीलं स्वभावः । आनुलोम्यमनुकूलता । एतेष्वर्थेषु गम्यमानेषु शब्दादिवर्जित-कर्मणि कृञो वोरट् त्यो भवति । तीर्थकरो जिनः । यशस्करी जिनविद्या । श्रद्धाकरः । प्रेषणाकरः । अशब्दादाविति किं ? शब्द-कारः । श्लोककारः । इत्यादि ।

**९९२ ॥ गमेः खच्खड्डाः । २ । २ । ५८ ।** कर्मणि सुपि च यथासंभवं वाचि गमेर्धोः खच् खड् ड इत्येते त्या भवंति ।

**९९३ ॥ मुमचः । ४ । ३ । २३२ ।** पूर्वपदस्याजंतस्याङ्गः खिदंते कृति यौ मुमागमो भवति । तुरंगमः । तुरंगः । तुरगः । " ङ्यापोः क्वचिद् खौ,, इति प्रः । भुजंगमः । भुजंगः । भुजगः ।

**९९४ ॥ विहायो विह च । २ । २ । ५९ ।** विहायस् शब्दस्य वाचो विहादेशो भवति । गमेः खच्खड्डाः प्रागेव सिद्धाः । विहायसा गच्छतीति विहंगमः । विहंगः । विहगः ।

**९९५ ॥ सुदुस्याधारे डः । २ । २ । ६० ।** सु दुस् इत्येतयोर्वाचोर्गमेर्डो भवत्याधारे । सुखेन गम्यतेऽस्मिन्निति-सुगो देशः । दुर्गो देशः ।

**९९६ ॥ आशिषि घ्नः । २ । २ । ६३ ।** कर्मणि वाचि हंतेराशिषि गम्यमानायां डो भवति । तिमिं हंत्वित्याशंसितः तिमिहः । शत्रुहः । शापहः ।

**९९७ । क्वचिदपे । २ । । २ । ६४ ।** कर्मण्यपशब्दे च सुबंते वाचि हंतेः क्वचिड्डो भवति । केशमपहंतीति केशापहः । तमोपहः । दुःखापहः । क्वचिच्छब्दः शिष्टप्रयोगानुसरणार्थः ।

९९८ ॥ **टगमर्त्ये । २ । २ । ६६** । कर्मणि वाचि हंतेष्टग् भवत्यमर्त्ये कर्त्तरि । वातं हंति विनाशयति वातघ्नमाविकं क्षीरं । पित्तघ्नं माहिषं पयः । श्लेष्मघ्नं कटुकं । जायाघ्नास्तिलकः । पतिघ्नी पाणिरेखा ।

९९९ ॥ **जायापत्योर्लक्षणे । २ । २ । ६७** । जाया पति इत्येतयोर्वाचोः हंतेष्टग् भवति लक्षणे लक्षणवति कर्मकर्तरि मर्त्ये । लक्षणं शुभाशुभसूचनं तिलकालकादि । जायाघ्नो ब्राह्मणः । येन तिलकादिलक्षणेन जायां हंति तद्वानित्यर्थः । एवं—पतिघ्नी कन्या ।

१००० ॥ **स्पृशोऽनुदके क्किः । २ । २ ।६८।** स्पृशेरुदकवर्जिते सुबंते वाचि क्किस्त्यो भवति । घृतं स्पृशतीति घृतस्पृक् । मंत्रेण स्पृशतीति मंत्रस्पृक् । अनुदक इति किं ? उदकस्पर्शः ।

१००१ ॥ **ऋत्विगद्धृक्स्रक्दिगुष्णिगंचुयुजिक्रुंचः । २ । २ । ७१** । ऋत्विक् दधृक् स्रक् दिक् उष्णिक् इत्येते शब्दाः क्किन्त्यांताः निपात्यंते । अंचति युजि क्रुंच इत्येतेभ्यः क्किर्भवति । ऋतौ ऋतुं वा यजतीति ऋत्विक् । धृष्णातीति दधृक् । क्किर्द्वित्वं च । सृजंति तामिति स्रक् । कर्मणि क्किरमागमश्च । दिशंति तां–दिक् । कर्मणि क्किः । उत्स्निह्यतीति–उष्णिक् । ग्यंतखं षत्वं च निपात्यं । अंचु–प्राङ् । दध्यङ् । युजि–युङ् । क्रुञ्च–क्रुङ्, क्रुञ्चौ । निपातनादनखं ।

१००२ ॥ **कर्मणीवे त्यदाद्यन्यसमाने दृशष्टक् सक् च । २ । २ । ७२** । त्यदादावन्यशब्दे समानशब्दे च कर्मणि इवार्थे उपमाने वाचि दृशः टक् सक् क्किश्च त्या भवंति । त्यमिव पश्यति, त्य इव दृश्यते,—त्यादृशः । त्यादृक्षः । त्यादृक् ।

"आः,, इत्यात्वं । एवं—तादृशः, तादृक्षः, तादृक् । अन्यादृशः । अन्यादृक्षः, अन्यादृक् । सदृशः, सदृक्षः, सदृक् । " समानस्य धर्मादिषु,, इति सादेशः ।

१००३ ॥ मन्वन्क्वनिब्विचः क्वचित् । २ । २ । ७३ । सुपि वाचि धोर्मन् वन् क्वनिप् विच् इत्येते त्या क्वचिद् दृश्यंते । क्वचिदिति बहुलार्थं । तेन—यथालक्ष्यं लक्षणव्यवस्था । मन्—सुष्ठु शृणातीति सुशर्मा । सुष्ठु तरतीति सुतर्म्मा । शृणाति दुःखमिति शर्मा सुखं । वृणोति शरीरमिति वर्म तनत्रं । हिनोति व्यवहारमिति हेम सुवर्णं । दधाति शोभामिति धाम । क्वचिद् ग्रहणान्निरुपपदादपि त्यः । वन्-विजायते इति विजावा । "वन्या,, इत्यात्वं । एवमग्रे गच्छतीत्यग्रेगावा । "पे कृति बहुलं,, इतीपोऽनुप् । क्वनिप्—प्रातरेति प्रातरित्वा । करोतीति कृत्वा । कित्वादेनप् पित्वात् तुक् च भवतः । ध्यायतीति धीवा । ध्याप्योः क्वनिपि-क्वचिदन्यदेव" इति यण इक् । "हलो यणिकः" इति दीः । एवं-प्यायत इति पीवा । विश्-विशतीति वेट् । रिषतीति रेट् । षत्वजश्त्वे । एवर्थश्चकारः । जागर्त्तीति जागः । अन्यथा-"जागुरविञिणश्विङितीति एब्प्रतिषेधः स्यात् । शुभमिति शिः । शुभं यातीति । शुभंयाः। कीलालं पिबतीति कीलालपा ।

१००४ ॥ क्विप् । २ । २ । ७४ । धोः क्वचित् क्विप् दृश्यते । अंतरीक्षे सीदतीति-अंतरीक्षसत् । एवं—द्युसत् । अंडसूते इति—अंडसूः । शतसूः । मित्रं द्वेष्टीति मित्रद्विट् । प्रद्विट् । द्विट् । मित्राय द्रुह्यतीति मित्रध्रुक् । गां दोग्धीति गोधुक् । प्रधुक् । अश्वं युनक्ति युज्यतेऽनेन वा इति अश्वयुक् । प्रयुक् । युजीति पूर्ववत् । तत्वं वेत्ति जानाति विंते विचारयति वा तत्वबित् । प्रवित् । विद्-

ति विद्यंते विंदंति वा विदः । तेषां वरः–विदांवरः । वाक्यं भिनत्तीति वाक्यभित् । प्रभित् । भित् । तमश्छित् । प्रच्छित् । छित् । शत्रुजित् । प्रजित् । जित् । अग्रणीः । प्रणीः । नीः । विराट् । सम्राट् । उखाश्रत् । पर्णध्वत् । वहाभ्रट् । पक् । याः । हाः । मित्रभूः । प्रतिभूः ।

१००५ ॥ **भजो ण्विः । १ । २ । ७७ ।** सुबंते वाचि भजेर्ण्विर्भवति । णकार ऐवर्थः । इकार उच्चारणार्थः । वकारः साति साम्ये बाधनार्थः । तेनेह क्विप् न भवति । अर्धं भजतीति-अर्द्धभाक् ।

१००६ ॥ **शीलेऽजातौ णिन् । १ । २ । ७८ ।** जातिवर्जिते सुबंते वाचि धोः णिन् भवति शीले गम्यमाने । यत्र फलनिरपेक्षा प्रवृत्तिस्तच्छीलं । उष्णं भुङ्क्ते इत्येवं शीलः उष्णभोजी । उदासरंतीत्येवं शीला उदासारिण्यः । एवं–प्रत्यासारिण्यः गावः । प्रस्थायी । प्रयायी । शील इति किं ? उष्णभोजः । अजाताविति किं ? शालीन् भोक्ता । तृन्नेव ।

१००७ ॥ **कर्तरीवे । १ । २ । ७९ ।** कर्तृवाचिन्युपमाने वाचि धोर्णिन् भवति । जात्यशीलार्थमिदं । उष्ट्र इव क्रोशतीति—उष्ट्रक्रोशी । ध्वांक्षरावी । सिंहनर्दी । वृत्ताविवार्थोंतर्भूत इति तदप्रयोगः ।

१००८ ॥ **व्रताभीक्ष्ण्ये । १ । २ । ८१ ।** सुबंते वाचि धोर्णिन् भवति व्रते आभीक्ष्ण्ये गम्यमाने । व्रतं शास्त्रतो नियमः । पार्श्वे एव शेष्यं—पार्श्वशायी । स्थंडिलशायी । अश्राद्धभोजी । अलवणभोजी । पुनः पुनर्यद्भवतीति तदभीक्ष्णं । तस्य भावः आभीक्ष्ण्यं । कषायमाभीक्ष्ण्यं पिबंतीति कषायपायिणो गांधारयः । क्षीरपायिणः उशीनराः । सौवीरपायिणो बाल्हीकाः ।

१००९ ॥ मन्यात् । २ । २ । ८३ । सुबंते वाचि मन्यतेर्णिन् भवति । शोभनमानी ।

१०१० ॥ खश् स्वस्य । २ । २ । ८४ । स्वस्यात्मनो यत्संबंधि सुबंतं तस्मिन् वाचि मन्यतेः खश् भवति । दर्शनीयमात्मानं मन्यते दर्शनीयंमन्यः । सर्वज्ञंमन्यः । खित्त्वान्मुम् । शित्वाद् विकरणश्च ।

१०११ ॥ जनोऽनौ डः । २ । २ । ९६ । कर्मण्यनुशब्दे च वाचि जनेर्डो भवति भूते । पुमांसमनुजातः-पुमनुजातः । पुमनुजः । स्त्र्यनुजः । "अकर्मका अपि धवः सगयः सकर्मका भवंति" इति-जनिः सकर्मकः ।

१०१२ ॥ ईपि । २ । २ । ९७ । ईबंते वाचि जनेर्डो भवति भूते । उपशमे जातः उपशमजः । अप्सु जातः—अप्सुजः । सरसिजः । "ईपोऽद्वलः,, इतीपोऽनुप् ।

१०१३ ॥ कायामजातौ । २ । २ । ९८ । जातिवर्जिते कांते वाचि जनेर्डो भवति । बुद्धेर्जातः—बुद्धिजः संस्कारः । संकल्पजः—कामः । दुःखजः शोकः । अजाताविति किं ? अश्वाज्जातः ।

१०१४ ॥ क्वचित् । २ । २ । ९९ । क्वचिदन्यस्मिन् वाचि जनेर्डो भवति भूते लक्ष्यानुरोधेन । किंजातेन किंजः । अलंजातेन—अलंजः । द्वाभ्यां जन्मनोपनयेन च जातः-द्विजः । न जातः अजः । प्रजाता प्रजाः । स्त्रीभ्यो जातं—स्त्रीजमनृतं । अद्भयो जातं—अब्जं । क्वचिदन्यस्मादपि धोः डो भवति । परमाहृति पराहः । परिखाता परिखा । उपखा । अटति, अततीति वा आः । कनति कायतीति वा कः । खन्यते खनतीति वा खं । भातीति भं ।

१०१५ ॥ तः । २ । २ । १०० । धोर्भूते काले तसंज्ञस्त्यो

भवति । "क्तक्तवतू तः" इति तसंज्ञा । ककारोकारयोरित्संज्ञा । भूयते स्म भवति स्म इति वा विग्रहे–भूतः । भूतवान् । शयितं । शयितवान् । कृतः । कृतवान् । कृतवती । णेः ख—भावितः । भावितवान् । भावितवती । याचितं । कारितं । गमितं । जनितमित्यादि ।

१०१६ ॥ इट् ते । ५ । १ । १०२ । निष्कुष इडागमो भवति तसंज्ञके परतः । निष्कुषितः । निष्कुषितवान् ।

१०१७ ॥ डीयश्वीदिदूवेटोऽपतस्ते । ५ । १ । ११९ । डीय श्वि इत्येताभ्यामिकारेतो यस्मिन् कस्मिंश्चिद् विकल्पितेटश्च पततिवर्जिताद्धोस्तसंज्ञके परतो नेट् भवति ।

१०१८ ॥ द्रांतस्य तो नो दोऽमत्पूमूर्च्छा ॥ ५ । ३ । ८० । दकारांताद् रेफांताच्च मत्पूमूर्च्छिवर्जिताद्धोः परस्य तसंज्ञकस्य तकारस्य नकारादेशो भवति तत्संनिधाने दकारस्य च । "पूर्वस्य" इति वर्तमाने—

१०१९ ॥ ओदितः ।५। ३ ।८४। ओकारेतो धोः परस्य तकारस्य नत्वं भवति । डीनः । डीनवान् । श्यनिर्देशात् भौवादिकस्य भवत्येवेट् । डयितः । डयितवान् । ओश्वि गतिवृद्ध्योः । स्वब्वच्छ्यादेः कितीति साचो यणिक् । "हलो यणिकः" इति दीः । शूनः । शूनवान् । ईदित्—विजीओ भयचलनयोः । उद्विग्नः । उद्विग्नवान् । लजीओ लस्जिओ व्रीडे । स्फादिसखं । लग्नः । लग्नवान् । नेट्–अपरद्धः । अपरद्धवान् । "ऊदिद्रूजः" इति विकल्पेन विकल्पितेट्त्वं । गम्लृ सृप गतौ । "ऌोदिदचः—इत्यादिना नेट् । "हन्मन्–" इत्यादिना कखं । गतः । गतवान् । हनौ–हतः । हतवान् । प्रच्छौ–पृष्टः । पृष्टवान् ।

**१०२० ॥ आदितः । ५ । १ । १३६** । आदितो घोसे इट् न भवति । ञिमिदा-मिन्नः । मिन्नवान् । ञिक्ष्विदा—क्ष्विण्णः । क्ष्विण्णवान् ।

**१०२१ ॥ स्फादेरातो घोर्यण्वतोऽख्यात्यः । ५ । । ३ । ८१** । ख्याख्यावार्जितादाकारांताद् स्फादेर्यण्वतो घोः परस्य ततकारस्य नत्वं भवति । संस्त्यानः । संस्त्यानवान् । निद्राणः । निद्राणवान् । म्लानः । म्लानवान् । स्फादेरिति किं ? यातः । आत इति किं ? च्युतः । घोरिति किं ? निर्यातः । यण्वत इति किं ? स्नातः । अख्यात्य इति किं ? ख्यातः । ख्यातवान् । ख्यातः । ख्यातवान् ।

**१०२२ ॥ ल्वादेः । ५ । ३ । ८२** । ल्वादिभ्यः परस्य ततकारस्य नत्वं भवति । लूनः । लूनवान् । पूनः । पूनवान् ।

**१०२३ ॥ ऋतश्च क्तेः । ५ । ३ । ८३** । ऋकारांतेभ्यो ल्वादिभ्यश्च परस्य क्तेस्तकारस्य नत्वं भवति । इत्वं दीत्वं च । कीर्णिः । तीर्णिः । शीर्णिः । लूनिः । पूनिः । तकारस्य नत्वं प्रागेव सिद्धं । कीर्णः । कीर्णवान् इत्यादि ।

**१०२४ ॥ श्याञ्चुदिवोऽस्पर्शानपादानजये ।५।३।८७।**

श्यै अंचु दिव् इत्येतेभ्यः परस्य ततकारस्य अस्पर्शे अनपादाने जये चार्थे नत्वं भवति । प्रतिश्यायते स्म प्रतिशीनः । प्रतिशीनवान् । अभिशीनः । समच्यते स्म समक्नौ शकुनेः पक्षौ । आद्यूनः देवदत्तः । अन्यत्र-शीतं वर्त्तते । उदक्तमुदकं कूपात् । द्यूतं वर्त्तते ।

**१०२५ ॥ निर्वाणोऽवाते । ५ । ३ । ९०** । निर्वाण इति निस् पूर्वात् वातेः परस्य क्ततकारस्य नत्वं भवति अवाते कर्त्तरि । नि-

र्वाणो मुनिः। निर्वाणः प्रदीपः। अन्यत्र-निर्वातो वातः। निर्वातं वातेन।

**१०२६ ॥ शुष्पचोः क्वौ । ५ । ३ । ९२ ।** शुषि पच् इत्येताभ्यां परस्य ततकारस्य यथाक्रमं क व इत्येतावादेशौ भवतः । शुष्कः । शुष्कवान् । पक्वः । पक्वान् ।

**१०२७ ॥ क्षो मः । ५ । ३ । ९३ ।** क्षै जै सै क्षये । क्षा इत्येतस्मात् परस्य ततकारस्य मकारादेशो भवति । क्षामः । क्षामवान् ।

**१०१८ ॥ प्रस्त्यो वा । ५ । ३ । ९३ ।** प्रपूर्वात् स्त्यायतेः परस्य ततकारस्य मत्वं भवति वा । प्रस्तीमः । प्रस्तीमवान् । प्रस्तीतः । प्रस्तीतवान् ।

**१०२९ ॥ दोसोमास्थां त्किती । ५ । २ । १५८ ।** द्यतिस्यतिमास्थानां तकारादौ त्ये परतः इकारादेशो भवति । निर्दितः । निर्दितवान् । अवसितः । अवसितवान् । प्रमितः । प्रमितवान् । उपस्थितः । उपस्थितवान् ।

**१०३० ॥ धाञो हिः । ५ । २ । १६१ ।** धाञित्येतस्य हिरादेशो भवति तकारादौ त्ये परतः । विहितः । विहितवान् ।

**१०३१ ॥ दो दद् भोः । ५ । २ । १६३ ।** दा इत्येतस्य भुसंज्ञकस्य दद् इत्ययमादेशो भवति तकारादौ किति परतः । दत्तः । दत्तवान् ।

**१०३२ ॥ मरुद्गऽचः । ५ । २ । १६३ ।** मरुच्छब्दादजंताच्च गेः परस्य दा इत्येतस्य भुसंज्ञकस्य त्त इत्ययमादेशो भवति किति । मरुत्तः। मरुत्तवान्। प्रत्तः। प्रत्तवान्। परीत्तः। परीत्तवान्। तीति दीत्वं।

**१०३३ ॥ त्कित्त्येऽदोऽगे जग्धिः । १ । ४ । १२८ ।**

तकारादौ किति थे चागे परतो अदेर्जग्धिरादेशो भवति । जग्धः । जग्धवान् । प्रजग्ध्य ।

**१०३४ ॥ पूङ्यजोः शानः । २ । २ । १२१ ।** पूङो यजेश्च सत्यर्थे वर्तमानाद्धोः शानस्त्यो भवति । पवमानः । यजमानः ।

**१०३५ ॥ वयःशक्तिशीले । २ । २ । १२२ ।** धोः सत्यर्थे वर्तमानात् वयसि शक्तौ शीले च गम्यमाने शानस्त्यो भवति । वयो यौवनादिस्तत्र—कतीह शिखंडं वहमानाः । कतीह कवचं पर्यस्यमानाः । यस्मिन् शिखंडवहनादि भवति तदिह वयो गम्यते । शक्तिः सामर्थ्यं । तत्र—कतीह पचमानाः । कतीह समश्नानाः । कतीह पाके समासे च शक्ता इत्यर्थः । शीलं स्वभावः । तत्र—कतीहांजानाः । कतीह मंडयमानाः । कतीहांजानादिशीला इत्यर्थः ।

**१०३६ ॥ सुञ्द्विषर्हः सत्र्यरिशस्ये । २ । २ । १२४ ।** सुञ् द्विष् अर्ह् इत्येतेभ्यः सत्यर्थे वर्तमानेभ्यो यथाक्रमं सत्रिणि अरौ शस्ये च कर्त्तरि शतृस्त्यो भवति । सर्वे सुन्वंतः सत्रिणो यजमाना इत्यर्थः । द्विषन् शत्रुरित्यर्थः । अर्हन् विद्यां । अर्हन् पूजां । विद्याद्यर्हतया प्रशस्यतेः कर्त्तेत्यर्थः ।

**१०३७ ॥ शीलधर्मसाधौ तृन् । २ । २ । १२५ ।** शीले धर्मे साधौ च सत्यर्थे वर्तमानाद्धोः तृन् इत्ययं त्यो भवति । शीलमुक्तार्थः । धर्मः कुलाचारः । साधुः शोभनं । तत्र—शीले—कर्त्ता कटं । वदिता जनापवादान् । करणं वदनं च शीलमस्येत्यर्थः । धर्मे—वधूमूढां मुंडयितारः । के ते श्राविष्ठायनाः । श्राद्धे सिद्धेऽन्नमपहर्त्तारः आह्वरकाः । मुंडनाहरणादिरेव तेषामाचारानुप्रवृत्त इत्यर्थः । साधौ—कर्ता कटं । गंता खलं । साधु करोति गच्छतीत्यर्थः ।

**१०३८ ॥ भूभ्राज्यलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृधुवृतुसहचर इष्णुः ।२।२।१२६।** भूवादिभ्य शीलादौ सत्यर्थे वर्तमानेभ्यः इष्णुस्त्यो भवति । भवनशीलो भवनधर्मा साधु वा भवतीति भविष्णुः । एवं—भ्राजिष्णुः । अलंकरिष्णुः । निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्द्धिष्णुः । वर्तिष्णुः । सहिष्णुः । चरिष्णुः ।

**१०३९ ॥ शंम्यो घिनिण् । २ । २ । १२९ ।** शमादिभ्योऽष्टभ्यो धुभ्यः शीलादौ सत्यर्थे वर्तमानेभ्यो घिनिण् भवति । घकारः कुत्वार्थः । इकारः उच्चारणार्थः । "न मोऽकम्वम्यम्रमूनम्गम्चमः" इत्यैपूप्रतिषेधः । शमी । दमी । तमी । श्रमी । भ्रमी । क्षमी । कमी । प्रमादी ।

**१०४० ॥ दुहानुरुधदुषृद्विषद्रुहयुजत्यजरजभजाभ्याघ्रः । २ । २ । १३० ॥** दुहादिभ्यो धुभ्यः शीलादौ सत्यर्थे घिनिण् भवति । दोही । अनुरोधी । दोषी । द्वेषी । द्रोही । योगी । त्यागी । रागी । भोगी । अभ्याघाती । कल्याणभोगी । रजेति निर्देशान्नत्वं ।

**१०४१ ॥ रुचलार्थाद्धेरनः । २ । २ । १४३ ।** रुशब्दे चल कंपे इत्येतदर्थेभ्यो धिसंज्ञकेभ्यो धुभ्यः शीलादौ सत्यर्थेऽनस्त्यो भवति । रवणः । आक्रोशनः । चलनः । चोपनः । धेरिति किं ? रविता श्लोकं । चालिता ग्रामं ।

**१०४२ ॥ हलाद्यंताङ्ङैदितोऽयसूदुदीप्दीक्षणिङः ।२। २ । १४४ ।** ङकारेत ऐकारेतश्च हलादेर्हलंतात् धिसंज्ञकाद्धोः शीलादौ सत्यर्थेऽनो भवति यकारांत सूद् दीप् दीक्ष् णीङ् इत्येतान्

वर्जयित्वा । वर्त्तनः । वर्द्धनः । स्पर्द्धनः । जुगुप्सनः । मीमांसनः ।

**१०४३ ॥ निद्रातंद्राश्रद्धाशीङ्दयस्पृहिगृहिपतेरालुः** । २ । २ । १५४ । तंद्रादिभ्यः सत्यर्थे शीलार्थे वालुर्भवति । द्रै स्वप्ने । निद्रालुः । तंद्रालुः । ततो निपातनान्नत्वं । श्रत्पूर्वाद्धात्रः- श्रद्धालुः । शयालुः । दयालुः । स्पृहयालुः । गृहयालुः । पतयालुः । एते चुरादिषु कथादयः । तत्रातः खं । तस्य " परेऽचः प्राचः " इति स्थानिवद्भावात् "ण्युकः एप्", उकोऽत ऐत्रू न भवति ।

**१०४४ ॥ सन्भिक्षाशंसाविदिच्छादुः** । २ । २ । १६२। सन्नंतात् भिक्षादेश्च सत्यर्थे शीलादौ उर्भवति । सन्-चिकीर्षुः । जिहीर्षुः । भिक्षि-यांचायां । भिक्षुः । आङः शसिञ् इच्छायां । आशंसुः । विद ज्ञाने । त्यस्य सांनियोगे नकारागमः । विंदुः । इच्छेति इच्छतेः छकारः । इष इच्छायां । छकारो निपात्यते । इच्छुः ।

**१०४५ ॥ ञिन्मत्यर्चार्थशीलादिभ्यः क्तः** ।२।२।१८१। ञिद्भ्यो मत्यर्थेऽर्चार्थेभ्यः शीलादिभ्यश्च धुभ्यः सति काले क्तस्त्यो भवति । ञिमिदा—मिन्नः । ञिक्ष्विदा—क्ष्विण्णः । मतिरिच्छा ज्ञानं च । तत्रेच्छार्थेभ्यः—राज्ञां मतः । राज्ञामिष्टः । ज्ञानार्थेभ्यः- राज्ञां बुद्धः । अर्चार्थेभ्यः—राज्ञामर्चितः । शीलादिभ्यः—

शीलितो रक्षितः क्षांतः आक्रुष्टो जुष्ट उद्यतः ।
श्रयितः शमितस्तुष्टो हृष्टो रक्षित आशितः ॥
कांतोऽभिव्यापृतो दृष्टो दृतस्सुप्तो दृतःस्थितः ।
लिप्तोऽथ दर्पितः स्निग्ध इत्याद्याः सति संमताः ।

**१०४६ ॥ उणादयो बहुलं** । २ । २ । १८२। उणादयस्त्याः सति काले वर्तमानेभ्यो बहुलं भवंति ।

**१ ॥ कृवापाजिमिस्वदिसाध्यशूदसनिजनिचरीणुच-टिभ्य उण्** । कृ वा इत्येवमादिभ्यो धुभ्य उण् इत्ययं त्यो भवति । कारुः । वायुः । पायुः । जायुः । मायुः । स्वादुः । साधुः । आशुः । दारुः । सानुः । जानुः । चारुः । आयुः । चाटुः ।

**२ ॥ गमेर्डोः** । गम् इत्येतस्य धोर्डो भवति । गौः ।

**३ ॥ भ्रमेश्च डूः** । भ्रम इत्येतस्य धोः डूर्भवति । भ्रूः ।

**४ ॥ इतिश्तिपौ धुनिर्देशे** । नंदिः । विदिः । मिदिः । दरिः । भवतिः । जुहोतिः । अत्तिरित्यादयः । बहुलग्रहणाद् येभ्यो धुभ्यो यस्मिन्नर्थे ये यथादृश्यंते ते तेभ्यस्तस्मिन्नर्थे तथा भवंति । ध्वर्थकार्यनियमासिद्धो भवति ।

यश्च वाच्यस्तृष्णा (ष्टा) व्याप्तं सूक्तत्र प्रयत्नतः ।
तत्प्रत्येयमिहोणादौ रत्नाकरमिवाखिलं ॥ १ ॥

**१०४७ ॥ पदूरुजो घञ् । २ । ३ । १६** । पदिरुजिभ्यां घञ् त्यो भवति स च कर्त्तरि । पद्यतेऽसाविति पादः । रुज्यतेऽसाविति रोगः । घित्वात् कुत्वं ।

**१०४८ ॥ सृः स्थिररुग्मत्स्यबले । २ । ३ । १७** । सर्त्तेर्धोः स्थिरादिषु कर्तृषु घञ् भवति । सरतीति सारः । चंदनस्य सारः-चंदनसारः । एवं–खदिरसारः । कालांतरस्थायी पदार्थ उच्यते । अतीसारो व्याधिः । "घञि प्रायः" इति दीत्वं । विसारो मत्स्यः । सारं बलं ।

**१०४९ ॥ भावे । २ । ३ । १८** । धोर्भावे घञ् भवति । भवनं भावः । पाकः । त्यागः । रागः । कृदभिधेयो भावो लिंग-संख्यावान् द्रव्यवत् भवति ।

**१०५० ॥ अकर्त्तरि ।२।३।१९।** कर्त्तुरन्यस्मिन् कारके धोर्घञ्

भवति । प्रास्यते तामिति प्रासः। प्रतुद्यतेऽनेन प्रतोदः । दास्यतेऽस्मै इति दासः। आहरंति तस्मात्-इत्याहारः। भुज्यतेऽस्मिन्-भोगः। इत्यादि।

**१०५१ ॥ इङः । २ । ३ । २० ।** इङो धोर्भावेऽकर्त्तरि घञ् भवति । अचोऽपवादः। अधीयते इति-अध्यायः । उपेत्याधीयतेऽस्मात् इत्युपाध्यायः । उपाध्यायी । उपाध्याया । बह्वादित्वाद्वा ङी ।

**१०५२ ॥ इणोऽभ्रेषे । २।१।३३।** गिपूर्वादिणो धोरभ्रेषे विषयेऽर्थे वर्तमानादकर्त्तरि घञ् भवति । भ्रेषः स्वरूपाच्चलनं । एषोऽत्र न्यायः । एतदत्र साधुरित्यर्थः । भ्रेष-न्ययं गतः पापः । विशेष्यलिंगवचनाविव विशेषणानां ।

**१०५३ ॥ य्वृग्रह्वृदृगम्वश्रणोऽच् । २ । ३ । ५४ ।** इ उ ऋ इत्येतदंतेभ्यो ग्रह् वृ दृ गम् वश् रण् इत्येतेभ्यश्च धुभ्यो भावेऽकर्त्तरि अच् त्यो भवति, घञोपऽवादः। इ-चयः। जयः। क्षयः। क्रयः । उ-नवः। स्तवः। पवः। लवः। ऋ-तरः। धरः। ग्रहादि-ग्रहः। वरः। आदरः। गमः। वशः। रणः।

**१०५४ ॥ स्थादिभ्यः कः । २ ।३ । ७० ।** स्थाप्रभृतिभ्यो धुभ्यो भावेऽकर्त्तरि कस्त्यो भवति । प्रतिष्ठतेऽस्मिन्-इति प्रस्थः । संतिष्ठतेऽस्यामिति संस्था । व्यवतिष्ठंतेऽनयेति व्यवस्था । प्रस्नांत्यस्मिन्निति प्रस्नः। प्रपिबंत्यस्मिन् इति प्रपा । विध्यतेऽनेनेति विधः । " ज्यशिव्यधि- " इत्यादिना यण इक् । आविध्यतेऽस्मिन्निति-आविधः । विहन्यतेऽस्मिन्ननेन वा विघ्नः । आयुध्यतेऽनेनेति-आयुधः ।

**१०५५ ॥ ड्वितः क्त्रिः । २।३।७४।** डुशब्देतो धोर्भावेऽकर्तरि क्त्रिस्त्यो भवति । क्त्र्यंतस्य केवलस्याप्रयोगात् " भावादिमः क्त्रिः" इतीमपर एव प्रयुज्यते । डुपचौञ्—पाकेन निर्वृत्तमित्यस्वपदेन विग्रहः । पक्त्रिमं । डुवपीञ्—उप्त्रिमं । डुयाचृ-याचित्रिमं ।

डुधाञ्-विहित्रिमं । डुकृञ्-कृत्रिमं ।

१०५६ ॥ **गौ धोः किः । २ । ३ । ७८ ।** गौ वाचि धुसंज्ञकात् धोर्भावेऽकर्त्तरि किर्भवति । प्रधानं प्रधीयते इति धेटो धाञो वा-प्रधिः । एवं-विधिः । निधिः । उपाधिः । समाधिः । आदानं आदीयतेऽस्मात्-इति दारूपाणां चतुर्णामन्यतमस्मात् किः । आदिः ।

१०५७ ॥ **कर्मण्याधारे । २ । ३ । ७९ ।** कर्मणि वाचि धोरकर्त्तरि आधारे किर्भवति । जलं धीयतेऽस्मिन्निति जलधिः । शरधिः । इषुधिः । वारिधिः ।

१०५८ ॥ **युज्यद्विच्छप्रच्छस्वप्रक्षो नङ् । २ । ३ । ७६ ।** युज् यत् विच्छ् प्रच्छ् स्वप् इत्येतेभ्यो भावेऽकर्तरि नङ् भवति । युजनं—युज्जः । यत्नः । विश्नः । प्रश्नः । स्वप्नः । रक्ष्णः । विच्छेरनेबर्थे क्लित्करणं ।

१०५९ ॥ **याच्ञा । २ । ३ । ७७ ।** याच्ञेति स्त्रियां भावेऽकर्तरि नङ् निपात्यते । याचनं—याच्ञा ।

१०६० ॥ **स्त्रियां क्तिः । २ । ३ । ८० ।** स्त्रीलिंगे भावेऽकर्तरि वर्तमानाद्धोः क्तिस्त्यो भवति । घञादेरपवादः । दृश्-दृष्टिः । सृज्—सृष्टिः । चितिः । कृतिः । भ्रांतिः । शांतिः । "ऌस्य झल्क्योः ङ्क्ति" इति दीर्घत्वं । कीर्णिः ।

१०६१ ॥ **शीणविन्निषन्निपद्सुमन्समजः । २ । ३ । ८१ ।** शीप्रभृतिभ्योऽकर्त्तरि स्त्रियां खौ क्यप् भवति । शेरतेऽस्यामिति शय्या । यंत्यस्यामनयेति वा इत्या । विदंत्यस्यां तया वा कर्मकामौ इति विद्या । निषदंत्यस्यां निषद्या । निपद्यंतेऽस्यां निपद्या । मन्यतेऽनया मन्या । सुनोत्यस्यां सुत्या । समजंत्यस्यां समज्या । संशीतिः ।

समितिः । वित्तिः । मतिः । सुतिः । इत्यादि बहुलवचनात् सिद्धं ।

**१०६२ ॥ संपदादिभ्यः क्विप्क्तिः । २ । ३ । ९१ ।** संपदादिभ्यो धुभ्यो भावेऽकर्तरि स्त्रियां क्विब्भवति क्तिश्च । संपत् । संपत्तिः । विपत् । विपत्तिः । आपत् । आपत्तिः । परिषत् । परिषत्तिः । आशीः ।

**१०६३ ॥ ण्यास्विद्श्रंथिघट्टिवंदोऽनः । २ । ३ । ९४ ।** णि आस् विद् श्रंथि घट्टि वंद इत्येतेभ्यः स्त्रियां भावेऽकर्तरि अनस्त्यो भवति । णि इति णिङ्णिचोः सामान्यग्रहणं । भावना । कामना । कारणा । हारणा । योजना । लक्षणा । आसना । वेदना । श्रंथना । घट्टना । वंदना ।

**१०६४ ॥ त्यात् । २ । ३ । ९९ ।** त्यांतेभ्यो धुभ्यो भावेऽकर्तरि स्त्रियामत्यो भवति । कित रोगापनयने ।

**१०६५ ॥ किद्गुप्तिजः सन् भिषज्यादिनिंदाक्षमे । २ । १ । ३ ।** किद् गुप् तिज् इत्येतेभ्यो यथासंख्यं भिषज्यादौ निंदायां क्षमायां चार्थे वर्तमानेभ्यः सन् इत्ययं त्यो भवति स्वार्थे । चिकित्सा । गुप् रक्षणे । "गुपूधूपविच्छपनपणेरायः" इत्यायः । गोपाया । चिकीर्षा । पुत्रीया । पुत्रकाम्या । लोलूया । कंडूया । अटाट्या ।

**१०६६ ॥ सरोर्हलः । २ । ३ । १०० ।** सह रुणा वर्तमानात् हलंताद्धोः भावेऽकर्तरि स्त्रियामत्यो भवति । कुडिञ् दाहे । उपदेशावस्थायामेव " इदितो नुम् " इति नुम् । कुंडा । हुडिञ् संपाते । हुंडा । शिक्षा । भिक्षा । ईहा । ऊहा ।

**१०६७ ॥ षिद्भिदादिभ्योऽङ् । २ । ३ । १०१ ।** षिद्भ्यो भिदादिभ्यश्च भावेऽकर्तरि स्त्रियां अङ्त्यो भवति । जृष्—।

१०६८ ॥ दृशुरेप् ५ । २ । १४३ । दृशेः ऋवर्णांतानां च गूनामाङि परतः एप् भवति । इत्येप् । रंतत्वं । टाप् । जरा । त्रपूष्—त्रपा । क्षिप्—अयादेशः । क्षया । क्षमूष्—क्षमा । घटादयःषितः । घटैष्—घटा । व्यथैष्—व्यथा । प्रथैषि—प्रथा । भिदा विदारणे । भित्तिरन्या । भिदा द्वैधीकरणे । विदा विचारणे । वित्तिरन्या । क्षिपा प्रेरणे । क्षितिः । इत्यादि ।

१०६९ ॥ चिंतिपूजिकथिकुंबिचर्चः । २ । ३ । १०२ । चिंत्यादिभ्यो भावेऽकर्तरि स्त्रियां अङ्त्यो भवति । चिंत्यादयो हि चुरादिण्यंताः । णेः खं । चिंता । पूजा । कथा । कुंबा । चर्चा । भूषिभेषिस्पृहिलोलिदोलिभ्यश्चेति वक्तव्यं । भूषा । भिषा । स्पृहा । लोला । दोला ।

१०७० ॥ गावातः । २ । ३ । १०३ । आकारांताद्धोर्भावेऽकर्तरि स्त्रियामङ्त्यो भवति । प्रज्ञायते अस्यां—प्रज्ञा । प्रदीयतेऽस्यां प्रदा । प्रधीयतेऽस्यां प्रधा । उपधा । "इटि चात्खं" इत्यात्खं । टाप् ।

१०७१ ॥ करणाधारे चानट् । २ । ३ । ११२ । करणे आधारे च भावे च धोरनट् भवति । घञाद्यपवादः । टित्वात् स्त्रियां ङीः । वृश्च्यतेऽनेनेति व्रश्चनः । इध्मनां व्रश्चनः इध्मव्रश्चनः । शात्यतेऽनेनेति शातनः । पलाशानां शातनः—पलाशशातनः । लूयतेऽनेनेति लवनः । श्मश्रुकर्तनः । आधारे—शेरतेऽस्मिन् इति-शयनं । आस्यतेस्मिन्निति आसनं । अधिक्रियतेऽस्मिन्निति अधिकरणं । गौर्दुह्यतेऽस्यामिति गोदोहनी । तिलाः पीड्यतेऽस्यामिति तिलपीडनी । सक्तुधाना । नब्भावे—हसनं । जल्पनं । शयनं । आसनं । वदनं । भोजनं । चंदनानुलेपनं ।

**१०७२ ॥ पुंखौ घः प्रायः । २ । ३ । ११३ ।** धोः पुलिंगे खौ करणाधारयोः घस्त्यो भवति प्रायः । क्वचिद्भवति क्वचिन्न भवतीत्यर्थः । घकारः " छादेर्घे " इत्यत्र विशेषणार्थः । करणे–प्रच्छाद्यतेऽनेनेति प्रच्छदः । " छादेर्घे " इत्युक्तः प्रः । उरश्छाद्यतेऽनेनेति उरश्छदः । दंताश्छाद्यतेऽनेनेति दंतच्छदः । प्लवतेऽनेनेति प्लावः । आखन्यतेऽनेनेति आखनः । करः । आधारे–एत्य कुर्वंत्यस्मिन् इति–आकरः । एत्य लुनंत्यस्मिन्निति आलवः । एत्य पुनंत्यस्मिन्–आपवः । पुंखाविति किं ? प्रहरणो दंडः । पुंग्रहणं किं ? प्रदानं । प्राय इति किं ? प्रासादनः ।

**१०७३ ॥ खनेर्डडरेकेकबकाश्च । २ । ३ । ११५ ।** खनेर्धोः करणाधारयोः पुंखौ ड डर इक इकबक इत्येते त्या भवंति । चकारात् घश्च । आखन्यतेऽनेनास्मिन् वा–आखः । आखरः । आखनिकः । आखनिकबकः । आखनः ।

**१०७४ ॥ घञ् । २ । ३ । ११६ ।** खनेः करणाधारेषु घञ् भवति । आखानः । पृथग्वचनमुत्तरार्थं ।

**१०७५ ॥ तृस्त्रोऽवे । २ । ३ । ११७ ।** तृ स्तृ इत्येताभ्यां अवशब्दे वाचि करणाधारे पुंखौ घञ् भवति । अवतारः । समवतारः । अवस्तारः ।

**१०७६ ॥ हलः । २ । ३ । ११८ ।** हलंताद्धोः करणाधारयोः पुंखौ घञ् भवति । घापवादः । वेदः । चेष्टः । वेगः । नेगः । लेखः । गंडः । बंधः । संगः । निमार्गः । विमार्गः । अपामार्ग । " घञि प्रायः " इति दीः । आरामः । प्रासादः ।

**१०७७ ॥ स्वीषद्दुसि कृच्छ्राकृच्छ्रे खः । २ । ३ ।**

१२१ । करणाधारनिवृत्तं । सु ईषत दुस् इत्येतेषु कृच्छ्राकृच्छ्रवृत्तिषु वाक्षु धोः खो भवति घञाद्यपवादः । कृच्छ्रं दुःखं । अकृच्छ्रं सुखं । यथासंभवं विशेषणं । सुखेन शय्यते इति सुशयं भवता । ईषच्छयं भवता । दुःखेन शय्यते इति दुश्शयं भवता । एवं-सुकरः । दुष्करः । ईषत्करः कटो भवता ।सुबोधं काव्यं । ईषद्बोधं नाटकं । दुर्बोधं व्याकरणं।

**१०७८ ॥ कर्तृकर्मणोर्भूकृञ्भ्यां च्वौ । २ । ३ । १२२ ।** स्वीषद्दुस्सु कृच्छ्राकृच्छ्रार्थेषु वाक्षु कर्तृकर्मणोश्च च्व्यर्थे वर्तमानयोः वाचोर्यथासंख्यं भूकृञ्भ्यां खो भवति । सुखेनानाढ्येन आढ्येन भाव्यमिति विग्रहे–खः । “ खित्यज्ञे कृति, मुमचः ” इति मुम् । स्वाढ्यंभवं भवता । ईषदाढ्यंभवं भवता । दुराढ्यंभवं भवता । सुखेनानाढ्य आढ्यः क्रियते स्वाढ्यंकरो जिनदत्तः । ईषदाढ्यंकरः । दुराढ्यंकरो भवान् ।

**१०७९ ॥ आतोऽनः । २ । ३ । १२३ ।** स्वीषद्दुस्सु कृच्छ्राकृच्छ्रार्थे वाचि धोराकारांतादनस्त्यो भवति । खापवादः । सुखेन ग्लायते इति सुग्लानं । ईषद्ग्लानं । दुर्ग्लानं । सुज्ञानं । ईषद्ज्ञानं । दुर्ज्ञानं तत्त्वं ।

**१०८० ॥ शास्युधधृषमृषदृशोऽते । २ । ३ । १२४ ।**

पूर्वयोगापेक्षयांते दुसि कृच्छ्रार्थे वाचि शास् युध् धृष् मृष् दृश् इत्येतेभ्यो धुभ्योऽनस्त्यो भवति । दुःशासनः । दुर्योधनः । दुर्धर्षणः । दुर्मर्षणः । दुर्दर्शनो राजा ।

**१०८१ ॥ निषेधेऽलंखल्वोः क्त्वा । २ । ४ । ४ ।** निषेधवृत्त्योरलंखलु इत्येतयोर्वाचोर्धोः क्त्वात्यो वा भवति । अलं कृत्वा । खलुकृत्वा । अलं बाले रुदित्वा रुदितेन रोदनेन । पक्षेक्तोऽनद् च ।

**१०८२ ॥ परकालैककर्तृकात् । २ । ४ । ७ ।**
परः कालो यस्याः सा परकाला क्रिया तयैकः कर्ता यस्य स तथा । तस्माद् संबंधिशब्दात् पूर्वकालवाचिनो धोः क्त्वात्यो भवति वा । स्नात्वा भुङ्क्ते । भुक्त्वा व्रजति । व्रजित्वा करोति । कृत्वा शेते ।

**१०८३ ॥ मृडमृद्गुधकुषक्लिशवद्वसः क्त्वि । १ । १ । ९९ ।**
मृडादीनां क्त्वात्ये परे किद्वत्कार्यं भवति नान्येषां ।

**१०८४ ॥ रुद्विद्मुषग्रहस्वपप्रच्छां सनि च । १ । १ ।९७।** रुदादीनां सनि क्त्वात्ये किद्वद् भवति । रुदित्वा । विदित्वा । मुषित्वा । गृहीत्वा । सुप्त्वा । पृष्ट्वा ।

**१०८५ ॥ नोङ्स्थफवंचिलुंच्यृतितृष्मृषकृशः क्त्वि । १ । १ । ११०** । नकारोङस्थकारफकारांतस्य धोर्वंचि लुंचि ऋति तृषि मृषि कृश इत्येतेषां किद्वद् कार्यं भवति क्त्वि परे। श्रथित्वा, श्रंथित्वा । गुफित्वा, गुंफित्वा । वचित्वा । वंचित्वा । लुचित्वा । लुंचित्वा । ऋतित्वा । अर्त्तित्वा । तृषित्वा । तर्षित्वा । मृषित्वा । मर्षित्वा । कृशित्वा, कर्शित्वा ।

**१०८६ ॥ व्युङोऽवो हलः सन्क्त्वोः । १ । १ । १११ ।**
उकारोङो धोरिकारोङश्चावकारांतस्य हलादेस्सेटि सनि क्त्वात्ये च किद्वद् भवति वा । द्युतित्वा, द्योतित्वा । लिखित्वा, लेखित्वा ।

**१०८७ ॥ नशजोर्वा । ४ । ४ । २२ ।** नशो जकारस्य च गोरुङो वकारस्य खं वा भवति क्त्वात्ये परे । नष्ट्वा । नंष्ट्वा । भक्त्वा, भंक्त्वा ।

**१०८८ ॥ वोदितः । ५ । १ । ११०** । उदितो धोः परस्य क्त्वात्यस्य वा इद् भवति । देवित्वा । वर्त्तित्वा । ध्वंसित्वा ।

पक्षे-ऊठादिः । द्यूत्वा । वृत्वा । ध्वस्त्वा । "दोसोमास्थां ति कित्तीद्" इतीत्वं । सित्वा । मित्वा । दो ददूभोः इति ददादेशः । दत्त्वा । "धाञो हिः" हित्वा ।

१०८९ ॥ हाकः क्त्वि । ५ । २ । १६१ । हाको हिरादेशो भवति क्त्वाख्ये । हित्वा राज्यं । "क्तित्येऽदो जग्धिः" इति जग्ध्वा ।

१०९० ॥ प्यस्तिवाकूसे क्त्वः । ५ । १ । ३१ । तिसे वाकूसे क्त्वात्यस्य प्यादेशो भवति । प्रस्तुत्य । प्रकृत्य । अधिकृत्य । उच्चैः कृत्याचष्टे । नानाकृत्य गतः । तिवाकूसे इति किं ? अकृत्वा । परमकृत्वा ।

१०९१ ॥ प्ये । ४।४।४० । हनादीनां प्ये परे खं भवति । प्रहृत्य । प्रमत्य । प्रवत्य । प्रतत्य ।

१०९२ ॥ वा मः । ४ । ४ । ४१ । मकारांतानां हनादीनां प्ये परे खं भवति वा । नियत्य, नियम्य । विरत्य, विरम्य । आगत्य, आगम्य ।

१०९३ ॥ प्ये च । ४ । ३ । १० । दीङो नित्यमात्वं भवति प्ये एपूविषये च । उपदाय । अवदाय । उपदाता ।

१०९४ ॥ मिञ्मीञोरखाचि । ४ । ३ । ५० । मिञ् मीञ् इत्येतयोरात्वं भवति प्ये खाज्वर्जिते एञ्विषये च । निमाय गतः । प्रमाय गतः ।

१०९५ ॥ वा लीङ्लिनात्योः । ४ । ३ । ५१ । लिङ्लिनात्योः आत्वं भवति वा प्ये खाज्वर्जिते एञ्विषये च । विलाय, विलीय ।

१०९६ । णेः । ४ । ४ । ५७ । णेः खं भवत्यगे । प्रकाश्य । उत्तार्य । उपभोज्य । अनुभाव्य । अध्याप्य । प्रस्थाप्य । प्रतिपाद्य ।

**१०९७ ॥ ण्येऽय् घिपूर्वात्** । ४ । ४ । ६० । घिपूर्वात् वर्णात् परस्य णेरयादेशो भवति ण्ये परतः । प्रविभिदय्य । प्रच्छिदय्य । प्रशमय्य । प्रतमय्य । प्रकथय्य । प्रगणय्य गतः ।

**१०९८ ॥ पूर्वाग्रेप्रथमाभीक्ष्ण्ये खमुञ्** । २ । ४ । ८ । पूर्व अग्र प्रथम इत्येतेषु वाक्षु आभीक्ष्ण्ये च क्त्वर्थोपाधौ गम्यमाने परकालैककर्तृकाद्धोः खमुञ् भवति । पूर्वंभोजं । पूर्वं भुक्त्वा । अग्रेभोजं । अग्रेभुक्त्वा । प्रथमंभोजं । प्रथमं भुक्त्वा व्रजति । आभीक्ष्ण्ये–

**१०९९ ॥ प्राग्भृशाभीक्ष्ण्याविच्छेदे** । ५ । ३ । ३ । क्रियायाः साकल्यमवयवक्रियाणां वा कार्त्स्न्यं भृशार्थः । पुनः पुनरावृत्तिराभीक्ष्ण्यं । सातत्यमविच्छेदः । एतेषु यत्परं वाक्यं वा वर्तते तस्य प्रागातिखाङ्गकादेः सर्वस्य द्वे रूपे भवतः । भोजंभोजं । भुक्त्वा भुक्त्वा व्रजति । पायं पायं । पीत्वा पीत्वा व्रजति ।

ईक्षमीक्षं तदा बाले रोधं रोधं च मामनु ।
आयमायं निवृत्ता या जीवेदेकाकिनी कथं ॥

**११०० ॥ कर्मण्याक्रोशे** । २ । ४ । ११ । कर्मणि वाचि करोतेरेककर्तृकात् खमुञ् भवति आक्रोशे गम्यमाने । चोरंकारं, चोरं कृत्वा क्रोशति । चौरोऽसीत्याक्रोशतीत्यर्थः ।

**११०१ ॥ समर्थास्त्यर्थशकधृषज्ञाग्लाघटरभलभक्रमसहार्हे तुम्** । २ । ४ । ४७ । समर्थार्थेषु अस्त्यर्थेषु शकादिषु च वाक्षु धोस्तुम् भवति । समर्थो भोक्तुं । पर्याप्तो भोक्तुं । अस्ति भोक्तुं । भवति भोक्तुं । शक्नोति भोक्तुं । धृष्णाति भोक्तुं । जानाति भोक्तुं । ग्लायति भोक्तुं । घटते भोक्तुं । आरभते भोक्तुं । आलभते भोक्तुं । प्रक्रमते भोक्तुं । सहते भोक्तुं । अर्हति भोक्तुं ।

**११०२ ॥ कृत् कर्तर्यक्षिः । २ । ४ । ४८ ।** क्षिवार्जिताः कृतः कर्तरि भवंति । कारकः । कर्त्ता । कुंभकारः । अक्षिरिति किं ? कर्तुं व्रजति । कर्तुमिच्छति । कारंकारं व्रजति । अनिर्दिष्टार्थास्तुमादयः स्वार्थे भावे भवंति ।

**११०३ ॥ जन्भूगो यो वा । २ । ४ । ५१ ।** जन् भू गा इत्येतेभ्यो यस्त्यो वा कर्तरि भवति । जन्यो देवदत्तः । जन्यं देवदत्तेन । भव्यो देवदत्तः । भव्यं देवदत्तेन । गेयो देवदत्तः गाथानां । गेया गाथा देवदत्तेन ।

**११०४ ॥ श्लिष्शीङ्स्थास्वस्जन्रुह्जॄषारंभात् क्तः । २ । ४ । ५४ ।** श्लिषादिभ्यो धुभ्य आरंभार्थेभ्यश्च यः क्तः स कर्तरि वा भवति । आश्लिष्टो भवान् कन्यां । आश्लिष्टा कन्या भवता । शीङ्—अतिशयितो गुरुं । अतिशयितो गुरुर्भवता । स्था—उपस्थितो गुरुं भवान् । उपस्थितो गुरुर्भवता । आस्—उपस्थितो गुरुं भवान् । उपास्थितो गुरुर्भवता । वस्-अनूषितो गुरु भवान् । अनूषितो गुरुर्भवता । जन्—अनुजातः कन्यां भवान् । अनुजाता कन्या भवता । रुह्—आरूढो वृक्षं भवान् । आरूढो वृक्षो भवता । जॄष्—अनुजीर्णो वृषलीं भवान् । अनुजीर्णा वृषली भवता । आरंभः—प्रकृतं कटं भवान् । प्रकृतः कटो भवता । प्रकृतं भवता ।

**११०५ ॥ तयोर्व्यक्तखार्थः । २ । ४ । ५८ ।** तयोः कर्मभावयोः व्यक्तखार्था भवंति । कर्तव्यः कटः । कार्यः कटः । कृतः कटः । सुकरः । सुज्ञानं तत्त्वं भवता । भावे—शयितव्यं । शयितं । सुशयं । सुग्लानं भवता । सकर्मकात् कर्मणि अकर्मकात् भावे यथा स्युरेते इति व्यवस्थार्थस्तयोरिति । व्यानड्

बहुलमिति बहुलवचनात् अन्यत्रापि ल्यानटो भवंति । ज्ञानमावृणो-ति आव्रियतेऽनेनेति वा ज्ञानावरणीयं । एवं-दर्शनावरणीयं । वेदनीयं । मोहनीयं कर्म । स्नानीयं चूर्णं । दीयतेऽस्मादिति दानीयोऽतिथिः । निरदंति तदिति निरदनः । राज्ञा भुज्यंते राजभोजनाः शाल्यः । संप्रदीयतेऽस्मा इति संप्रदानं । अपादीयतेस्मादिति-अपादानं । अत एवान्येऽपि कृतोऽन्यत्रापि भवंति । पादाभ्यां ह्रियते इति पाद-हारकः । गलेन चुप्यते गलचोपकः । अत्र कर्मणि ण्वुः । चरोऽड्डुक्तः । मनसि हृञोऽपि । मनोहरतीति मनोहारी ।

**इति प्रक्रियावतारे कृद्विधिः षष्ठः समाप्तः ।**

**समाप्तेयं प्रक्रिया ।**

सत्संधिं दधते समासमभितः ख्यातार्थनामोन्नतं
निर्ज्ञातं बहुतद्धितं क्रममिहाख्यातं यशःशालिनां ।
सैषा श्रीगुणनंदितानितवपुः शब्दार्णवं निर्णयं
नावत्याश्रयतां विविक्षुमनसां साक्षात् स्वयं प्रक्रिया ॥१॥
दुरितमदेभनिशुंभत्कुंभस्थलभेदनक्षमोऽग्रनखैः ।
राजन्मृगाधिराजो **गुणनंदी** भुवि चिरं जीयात् ॥२॥
सन्मार्गे सकलसुखप्रियकरे संज्ञापिते सद्धने
प्राग्वासस्सुचरित्रवानमलकः कांतो विवेकी प्रियः ।
सोयं यः श्रुतकीर्तिदेवयतिपो भट्टारकोंतस्सको,
रंरम्यान्मम मानसे कविपतिः सद्राजहंसश्चिरं ॥३॥